# द्वितीयोऽध्यायः

## राजनीतिः

राजनीतेर्नृपाश्रयत्वात्प्रथमं नृपलक्षणमाह—

शास्त्राय गुणसंयोगः शास्त्रं विनयवृत्तये ।
विद्याविनीतो नृपतिः सतां भवति संमतः ॥ १ ॥

मेधावी मतिमान्दीनवदनो दक्षः क्षमावान् ऋजु-
र्धर्मात्माप्यनसूयको लघुकरः षाड्गुण्यविच्छक्तिमान् ।
उत्साही पररन्ध्रवित्कृतधृतिर्वृद्धिक्षयस्थानवित्
शूरो न व्यसनी स्मरत्युपकृतं वृद्धोपसेवी च यः ॥ २ ॥

बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।
चारेक्षणो दूतमुखः पुरुषः कोपि पार्थिवः ॥ ३ ॥

वाग्मी प्रगल्भ्यः( ल्भः ) प्र(स्मृ)तिमानुदग्रो बलवान्वशी ।
नेता दण्डस्य निपुणः कृतशिल्पः सुविग्रहः ॥ ४ ॥

पराभियोगप्रसहो दृष्टसर्वप्रतिक्रियः ।
परच्छिद्रानुपेक्षी च संधिविग्रहतत्त्ववित् ॥ ५ ॥

गूढमन्त्रप्रचारश्च देशकालविभागवित् ।
आदाता सम्यगर्थानां विनियोक्ता च पार्थिवः ॥ ६ ॥

क्रोधलोभभयद्रोहस्तम्भचापलवर्जितः ।
वृद्धोपदेशसंपन्नः शक्तो मधुरदर्शनः ॥
निर्वृतः पितरीवास्ते यत्र लोकः स पार्थिवः ॥ ७ ॥

आत्मसंपद्गुणैः सम्यक्संयुक्तं युक्तकारिणम् ॥
पर्जन्यमिव राजानं प्राप्य लोकोभिवर्धते ॥ ८ ॥

साधु भूतलदेवत्वं दुरापमकृतात्मभिः ॥
आत्मसंस्कारसंपन्नो राजा भवितुमर्हति ॥ ९ ॥

लोकाधाराः श्रियो राज्ञां दुरापा दुष्परिग्रहाः ।
तिष्ठन्त्याप इवाधारे चिरमात्मनि संस्कृते ॥ १० ॥

कुलं सत्वं वयः शीघ्रं दाक्षिण्यं क्षिप्रकारिता ।
अविसंवादिता सत्यं वृद्धसेवा कृतज्ञता ॥ ११ ॥

दैवसंपन्नताबुद्धिरक्षुद्रपरिवारता ।
शक्यसामन्तता चैव तथा च दृढभक्तिता ॥ १२ ॥

दीर्घदर्शित्वमुत्साहः शुचिता स्थूललक्षिता ।
विनीतता धार्मिकता गुणाः साध्वाभिगामिनः ॥ १३ ॥

गुणैरेतैरुपेतः सन्सुव्यक्तमभिगम्यते ।
तथा च कुर्वीत यथा गच्छेल्लोकाभिगम्यताम् ॥ १४ ॥

अन्यच्च विष्णुधर्मोत्तरे सुंज( नृप ? )लक्षणमाह—

सर्वलक्षणलक्षण्यो विनीतः प्रियदर्शनः ।
अदीर्घसूत्रो धर्मात्मा जितक्रोधो जितेन्द्रियः ॥ १५ ॥

ब्रह्मण्यश्चाविसंवादी दृढभक्तिः प्रियंवदः ।
अलोलुपः संयतवागगम्भीरः प्रियदर्शनः ॥ १६ ॥

नातिदण्डो न निर्दण्डश्चारचक्षुरजिह्मगः
व्यवहारे समः प्राप्ते पुत्रेण रिपुणा सह ॥ १७ ॥

रथे गजे च धनुषि व्यायामे च कृतश्रमः ।
उपवासतपःशीलो यज्ञयाजी गुरुप्रियः ॥ १८ ॥

मन्त्रिसांवत्सराधीनः समरेष्वनिवर्तकः ।
पूज्ये पूजयिता नित्यं दण्ड्ये दण्डयिता तथा ॥ १९ ॥

षाड्गुण्यस्य प्रयोक्ता च शक्त्युपेतस्तथैव च ।
नाहंवादी न निर्द्वन्द्वो न यत्किंचनकारकः ॥ २० ॥

कृते कर्मण्यमात्यानां कर्तामात्यजनप्रियः ।
संगृहीतजनस्तब्धः प्रसन्नवदनः सदा ॥ २१ ॥

सदा भृत्यजनावेक्षी क्रोधी (च ?) सुमहामनाः ॥ २२ ॥

षाड्गुण्यस्य प्रयोक्तेत्युक्तं तानेव षड्गुणानाह—

संधिश्च विग्रहश्चैव यानमासनमेव च ।
द्वैधीभावः संश्रयश्च षाड्गुण्यं परिकीर्तितम् ॥ २३ ॥

पणबन्धः स्मृतः संधिरपकारस्तु विग्रहः ।
जिगीषोः शत्रुविषये यानं यात्राभिधीयते ॥ २४ ॥

विग्रहेऽपि स्वके देशे स्थितिरासनमुच्यते ।
मारणं रध(न्ध्र)लाभस्तु द्वैधीभावस्तदुच्यते ।
उदासीने मध्यमे वा संश्रयात्संश्रयः स्मृतः ॥ २५ ॥

तेषां प्रयोगकालमाह——

समेन संधिरन्वेष्यो हीनेन च बलीयसा ।
हीनेन विग्रहः कार्यः स्वयं राज्ञा बलीयसा ॥ २६ ॥

तत्रापि तस्य पार्ष्णिस्तु बलीयान्न समाश्रयेत् ।
आसीनः कर्मविच्छेदी शक्यः कर्तुं रिपुर्यदा ॥ २७ ॥

अशुद्धपार्ष्णिर्बलवान् द्वैधीभावं समाश्रयेत् ।
बलिना विगृहीतस्तु यो संधेयेन पार्थिवः ॥ २८ ॥

संश्रयस्तेन कर्तव्यो गुणानामधमो गुणः ।
बहुक्षयव्ययायासं तेषां यानं प्रकीर्तितम् ॥ २९ ॥

बहुलाभकरं वा स्यात्तदा यानं समाश्रयेत् ।
सर्वशक्तिविहीनस्तु तदा कुर्यात्तु संश्रयम् ॥ ३० ॥

एवं च बोद्धा नृपतिर्गुणानां काले च देशे च तथा विभागे ।
समाश्रयेद्भार्गववंशमुख्य एतावदुक्तं नृपतेस्तु कार्यम् ॥ ३१ ॥

इति राजलक्षणम् । एवंविधैर्लक्षणैर्यु(क्तो)ऽभिषिक्तो राजा राज्यं कुर्यात् ।

तद्राज्यं कीदृशमीदृशमित्याह—

स्वाम्यमात्यसुहृत्कोषदेशदुर्गबलानि च ।
स्वाम्यमात्यो जनपदो दुर्गं दण्डस्तथैव च ॥ ३२ ॥

कोशो मित्रं च धर्मज्ञः समाङ्गं राज्यमुच्यते ।
समाङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्तितः ॥ ३३ ॥

तन्मूलत्वात्तथाङ्गानां स तु रक्ष्यः समन्ततः ॥ ३४ ॥

राज्यस्य सहायाधीनत्वात्सहायस्वरूपमाह—

अभिषेकार्द्रशिरसा राज्ञा राज्यावलोकिना ।
सहायावरणं कार्यं तत्र राज्यं प्रतिष्ठितम् ॥ ३५ ॥

यद्यप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेण(णा)सहायेन किमु राज्यं महोदयम् ॥ ३६ ॥

तस्मात्सहायान्वरयेत्कुलीनान्नृपतिः स्वयम् ।
शूरान्कु(न्कु)लीनजातीयान्बलयुक्तान् क्रियान्वितान् ॥ ३७ ॥

रूपसत्त्वगुणोपेतान्सज्जनान्क्षमयान्वितान् ।
क्लेशक्षमान्महोत्साहान्धर्मज्ञांश्च प्रियंवदान् ॥ ३८ ॥

हितोपदेशकान्राज्ञः स्वामिभक्तान्यशोर्थिनः ।
एवंविधान्सहायांश्च शुभकर्मसु योजयेत् ॥ ३९ ॥

याज्ञवल्क्योऽपि––

स मन्त्रिणः प्रकुर्वीत राजा मौलान्स्थिरान् शुचीन् ।
तैः सार्धं चिन्तयेद्राष्ट्रं विप्रेणाथ ततः स्वयम् ॥ ४० ॥

निवर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः ।
तावतोतन्द्रितान्दक्षान्प्रकुर्वीत विचक्षणान् ॥ ४१ ॥

तेषां विनियोगमाह––

तेषां मध्ये नियुञ्जीत शूरान्दक्षान् कुलोद्भवान् ।
शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥ ४२ ॥

धार्मिकान्धर्मकृत्येषु अर्थकार्येषु पण्डितान् ।
क्लीबान्स्त्रीषु नियुञ्जीत नीचान्नीचेषु कर्मसु ॥ ४३ ॥

अध्यक्षान् विविधान् कुर्यात्तत्र तत्र विपश्चितः ॥ ४४ ॥

सप्ताङ्गं राज्यमित्युक्तं तत्र स्वामिलक्षणस्योक्तत्वादमात्यलक्षणमाह––

प्रे(प्रे)ख(क्ष)कः पाठकश्चैव गणकः प्रतिबोधकः ।
गूढमन्त्रश्च तत्त्वज्ञो कालज्ञो दृष्टवित्तथा ॥ ४५ ॥

पितृमातामहाभिज्ञः स्मृतिसिद्धान्तगोचरः ।
संधिविग्रहविद्वांश्च मन्त्री ह्येष प्रकीर्तितः ॥ ४६ ॥

मन्त्रिणश्च ब्राह्मणादयः कार्याः तदेवाह । अन्यत्रामात्यलक्षणं विष्णुधर्मोत्तरे––

सर्वलक्षणलक्षण्यो मन्त्री राज्ञस्तथा भवेत् ।
ब्राह्मणो वेदतत्त्वज्ञो विनीतः प्रियदर्शनः ॥ ४७ ॥

स्थूललक्ष्यो महात्मा च स्वामिभक्तः प्रियंवदः ।
बृहस्पत्युशनःप्रोक्तं नीतिं जानाति तत्त्वतः ॥ ४८ ॥

रागद्वेषेण यः कार्यं न च हन्ति महीक्षितः ।
लोकापवादाद्राजार्थे भयं यस्य न जायते ॥ ४९ ॥

क्लेशक्षमस्तु धर्मात्मा विजितात्मा जितेन्द्रियः ।
गूढमन्त्रश्च तत्त्वज्ञः प्राज्ञो भक्तजनप्रियः ॥ ५० ॥

इङ्गिताकारतत्त्वज्ञ ऊहापोहविशारदः ।
शूरश्च कृतिविद्यश्च न च मानी विमत्सरः ॥ ५१ ॥

चारप्रचारकुशलः प्राणिभिः प्रणयात्मकः ।
षाड्गुण्यविधितत्त्वज्ञश्चोपायकुशलस्तथा ॥ ५२ ॥

वेत्ता विधाता कार्याणां नैव कार्यातिपातिता ॥
समश्च राजभृत्यानां तथैव च गुणप्रियः ॥ ५३ ॥

कालज्ञः समयज्ञश्च कृतज्ञश्च जनप्रियः ॥
यथानुरू(प)मर्हाणां पुरुषाणां नियोजिता ॥ ५४ ॥

राज्ञः परोक्षे कार्याणि संपराये भृगूद्वह ॥
कृत्वा निवेदिता राज्ञि कर्मणां गुरुलाघवम् ॥ ५५ ॥

शत्रुमित्रविभागज्ञो विग्रहस्य च तत्त्ववित् ॥
स राज्ञः सर्व कार्याणि कुर्याद्भृगुकुलोद्वह ॥ ५६ ॥

विदितानि तथा कुर्यान्न(ज्ञा)ज्ञातानि महीक्षितः ॥
अज्ञातानि नरेन्द्रस्य कृत्वा कार्याणि भारत ।
अचिरेणापि विद्वेषं मन्त्री समधिगच्छसि(ति) ॥ ५७ ॥

करोति यश्च कार्याणि विदितानि महीपतेः ।
भेदो न तस्य भवति कदाचिदपि भूभुजा ॥ ५८ ॥

एवंगुणो यस्तु भवेच्च मन्त्री
वाक्ये च तस्याभिरतिश्च राज्ञः ।
राज्यं स्थिरं स्याद्विपुला च लक्ष्मी-
र्यस्य च(वंशस्य?) दीप्तिर्भुवनत्रयेपि ॥ ५९ ॥

इति अमात्यलक्षणम् । अथैतादृशामात्यनियोजने राज्ञः कार्यसिद्धिरन्यथा कार्यहानिरधर्मश्चेत्याह कामन्दकः—

राज्ञा नियोजितेमात्ये राज्ञः सन्ति त्रयो गुणाः ।
यशः स्वर्गनिवासश्च पुष्टिश्च(पुष्टश्चैव) धनागमः ॥ ६० ॥

मूर्खे नियोजितेमात्ये त्रयो दोषा महीपतेः ।
अयशः कर्महानिश्च नरके पतनं ध्रुवम् ॥ ६१ ॥

तस्मान्महीपतिः सम्यग् विचार्य च पुनः पुनः ।
गुणवन्तं नियुञ्जीत गुणहीनं न योजयेत् ॥ ६२ ॥

अमात्यैर्व्यसनोपेतैर्ह्रियमाणो महीपतिः ।
अशक्त एवोत्पतितुं छिन्नपक्ष इवा(ण्ड)जः ॥ ६३ ॥

कामन्दकः—

व्यसनस्य प्रतीकारो राज्ञि राज्याभिषेचनम् ।
आयव्ययौ दण्डनीतिरमात्यप्रतिषेधनम् ॥
इत्यमात्यस्य कर्मेदं हन्ति स व्यसनान्वितः ॥ ६४ ॥

मन्त्रिणश्च ब्राह्मणादयः कार्यास्तद्वाह —

सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता ।
मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥ ६५ ॥

अन्यानपि प्रकुर्वीत शुचीन्प्राज्ञानवस्थितान् ।
सम्यगर्थं समाहर्तुं सामान्यान्सुपरीक्षितान् ॥ ६६ ॥

मौलान् शास्त्रविदः शूराल्लब्धलक्षान् कुलोद्भवान् ।
सचिवान् सप्त वा राजा कुर्वीत सुपरीक्षितान् ॥ ६७ ॥

कुलीनाः शुचयः शूराः श्रुतवन्तो न रागिणः ।
दण्डिनेः(दण्डनीतेः) प्रयोक्तारः सचिवाः स्युर्महीपतेः ॥ ६८ ॥

अन्तःसारैरकुटिलैः सद्वृत्तैः सुपरीक्षितैः ।
मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम् ॥ ६९ ॥

अशृण्वन्नपि बोद्धव्यो मन्त्रिणा पृथिवीपतिः ।
यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥ ७० ॥

मि(स्मृ)तिसारेऽपि—

स्मृतिस्तत्परतार्थेषु बितर्को ज्ञाननिश्चयः ।
दृढता मन्त्रगुप्तिश्च मन्त्रिसंपत्प्रकीर्तिते(ता) ॥ ७१ ॥

अमात्यो राजपुत्रश्च भुजावेतौ महीपतेरिति राजपुत्रस्यापि अमात्र(त्य)मध्ये परिगणितत्वात् प्रसङ्गतः पुत्रशिक्षामाह—

प्रजार्थं श्रेयसे राजा कुर्वीतात्मजरक्षणम् ।
लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमतन्द्रिताः ॥ ७२ ॥

आ(चा)र्य(र्ये)श्चार्यकर्तव्यं नित्ययुक्तैश्च रक्षणम् ।
धर्मार्थकामशास्त्राणि धनुर्वेदं च शिक्षयेत् ॥ ७३ ॥

रथे च कुञ्जरे चैनं व्यायामं कारयेत्तदा ।
शिल्पानि शिक्षते(ये)दार्मर्नास्य मिथ्याप्रियं वदेत् ॥ ७४ ॥

न चास्य सङ्गो दातव्यः क्रुद्धलब्धावमानितैः ।
तथापि विनयेदेनं यथा यौवनगोमुखे ॥ ७५ ॥

इन्द्रियैर्नावकृष्येत सतां मार्गात्सुदुर्गमात् ।
गुणाधानमशक्यं तु यस्य कर्तुं स्वभावतः ॥ ७६ ॥

बन्धनं तस्य कर्तव्यं गुप्ते देशे सुखान्वितम् ।
अविनीतकुमारं हि कुलमाशु विनश्यति ॥ ७७ ॥

अधिकारेषु सर्वेषु विनीतं विनियोजयेत् ।
आदौ स्वल्पे ततः पश्चात्क्रमेणापि बृहत्स्वपि ॥ ७८ ॥

कामन्दकोऽपि —

राजपुत्रा मदोद्धता गजा इव निरङ्कुशाः ।
भ्रातरं स्वामिनं घ्नन्ति पितरं चातिमानिनः ॥ ७९ ॥

राजपुत्रैर्मदोद्धूतैः प्रार्थ्यमानमितस्ततः ।
दुःखेन रक्ष्यं राज्यं हि व्याघ्राघ्रातमिवाविषः(मिषम्) ॥ ८० ॥

रक्ष्यमाणा यदि छिद्रं कथंचित्प्राप्नुवन्ति ते ।
सिंहशावा इव घ्नन्ति ते हि राज्यमसंशयम् ॥ ८१॥

पितरं स्वमसंशयमित्यपि पाठः ।

इति राजपुत्रशिक्षा । प्रसङ्गाद्राजपुत्रस्य कृत्यमाह—

पितुःसेवापरास्तिष्ठेत्कायवाङ्मानसैः सदा ।
तत्कर्म कुर्यान्नियतं येन तुष्टो भवेत्पिता ॥ ८२ ॥

तन्न कुर्याद्येन पिता मनागपि विषीदति ।
यस्मिन्पितुर्भवेत्प्रीतिः स्वयं तस्मिन्प्रियं चरेत् ॥ ८३ ॥

यस्मिन्द्वेषं पिता कुर्यात्स्वस्यापि द्वेष्य एव सः ।
असंमतं विरुद्धं च स्वयं नैव समाचरेत् ॥ ८४ ॥

प्राप्यापि युवराजत्वं प्राप्नुयाद्विकृतिं न च ।
स संपत्तिमदाच्चैव मातरं पितरं तथा ॥ ८५ ॥

भ्रातरं भगिनीं चापि अन्यान्वा राजवल्लभान् ।
महाजनांस्तथा राष्ट्रं नावमन्येन्न पीडयेत् ॥ ८६ ॥

प्राप्यापि महतीं वृद्धिं वर्तेत पितुराज्ञया ।
पुत्रस्य पितुराज्ञा हि परमं भूषणं स्मृतम् ॥ ८७ ॥

सोदरेषु च सर्वेषु नाधिक्यं संप्रदर्शयेत् ।
भ्रातॄणामवमानेन बहवो हि विनाशिताः ॥ ८८ ॥

पितुराज्ञोल्लङ्घनेन प्राप्यापि पदमुत्तमम् ।
तस्माद्भ्रष्टा भवन्तीह दासवद्राजपुत्रकाः ॥ ८९ ॥

एवं गृहाविरोधेन राजपुत्रो वसन्गृहे ।
त्यागी च सत्त्वसंपन्नः सर्वान्कुर्याद्वशे स्वके ॥ ९० ॥

शनैः शनैः प्रवर्धेत शुक्लपक्षमृगाङ्कवत् ।
एवं वृत्तो राजपुत्रो राज्यं प्राप्याप्यकण्टकम् ।
सहायवान्महामात्यश्चिरं भुङ्क्ते वसुंधराम् ॥ ९१ ॥

सहायाः पूर्वोक्ता ज्ञेयाः । इति राजपुत्रकृत्यनिरूपणम्—

विनयोपग्रहान्भृ(भू ?)त्यं कुर्वीत नृपतिः सुतान् ।
विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत् ॥ ९२ ॥

इति अनेन विनीतस्यैव राज्याधिकारे सिद्धे पुनरविनीतं प्रत्याह—

राजपुत्रः स दुर्वृत्तः परित्यागं हि नार्हति ।
क्लिश्यमानः स पितरं परानाश्रित्य हन्ति हि ॥ ९३ ॥

व्यसने सज्जमानं हि क्लेशयेद्व्यसनाश्रयैः ॥ ९४ ॥

इति मप्रसङ्गममात्यनिरूपणम् । सुहृदः—

नृपस्य ते हि सुहृदस्त एव गुरवो मताः ।
य एनमुत्पथगतं वारयन्त्यनिवारिताः ॥ ९५ ॥

सज्जमानमकार्येषु सुहृदो धारयन्ति ये ।
सत्यं ते नैव सुहृदो गुरवो गुरवो हि ते ॥ ९६ ॥

कोशनिरूपणम्–

वर्धमानोल्पनिस्राव(वः)ख्यातः पूजितदैवतः ।
ईक्षितद्रव्यसंपूर्णो ह्यय आप्तैरधिष्ठितः ॥ ९७ ॥

मुक्ताकनकरत्नाढ्यः पितृपैतामहोचितः ।
यत्र राजा तत्र कोशः कोशाधीना हि राजता ॥ ९८ ॥

अर्थादयं परश्चोच्चैर्लोको लोकस्य निश्चितः ।
पुमानर्थेन रहितो जीवन्नपि न जीवति ॥ ९९ ॥

यस्यार्थास्तस्य सुहृदो यस्यार्थास्तस्य पौरुषम् ।
यस्यार्थास्तस्य सर्वेपि सहायाः संभवन्ति हि ॥ १०० ॥

आपदर्थं च संरक्ष्यः कोशः कोशवता सदा ।
पुत्रादपि हि संरक्ष्यो भार्यायाः सुहृदस्तथा ॥ १०१ ॥

नान्यायं च व्ययं कुर्यात्प्रत्यवेक्षत ता(चा)न्वहम् ।
कृषिवाणिज्ययोर्दुर्गसेतुः कुञ्जरवन्द(बन्ध ?)नम् ॥ १०२ ॥

खन्यखरखनादानं(खन्याकरवनादानं) स्वस्थचित्तोपि वर्धयेत् ।
कोशमूलोपि राजेति प्रवादः सार्वलौकिकः ॥ १०३ ॥

एतत्सर्वं जहातीह कोशे व्यसनवान्नृपः ।
क्षीणं वणं(लं) वर्धयति स्वतो गृह्णाति च प्रजाः ॥ १०४ ॥

कोशवान्पृथिवीपालः परैरप्युपजीव्यते ।

कोशो द्रव्यमित्यर्थः । कोशः संरक्ष्य इत्युक्तं रक्षणं चाधिकारिसापेक्षमिति कोशाधिकारिलक्षणमाह--

लोहवस्त्राजिनादीनां रत्नानामभिधानवित् ॥ १०५ ॥

विज्ञाता फल्गुसाराणां अनाहार्यः शुचिस्मितः ।
निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्तितः ॥ १०६ ॥

इति कोशनिरूपणम् । अथ देशः--

यो राष्ट्रमनुगृह्णाति परिगृह्य स्वयं नृपः ।
संजातमुपजीवन्स लभते सुमहत्फलम् ॥ १०७ ॥

पौराञ्जानपदान्सर्वान्संश्रितोपाश्रितांस्तथा ।
यथाशक्त्यानुकम्पेत सर्वानप्यधनानपि ॥ १०८ ॥

धर्माधर्मौ विजानन्हि सतां मार्गमनुस्मरन् ।
प्रजा रक्षेन्नृपः साधु हन्याच्च परिपन्थिनः १०९ ॥

राष्ट्रोपघातं कुर्वीरन्ये पापा राजवल्लभाः ।
एकैकशः संहतांस्तान्दूष्यान्वा परिचक्षते ।
दूष्यानुपांशुदण्डेन हन्याद्राजाविलम्बितम् ॥ ११० ॥

इति राष्ट्रम् । दुर्गस्वरूपनिरूपणम् । तत्र सामान्यतो दुर्गप्र(शं)सामाह मनुः--

एकः शतं योधयति प्राकारस्थो धनुर्धरः ।
शतं दशसहस्राणि तस्माद्दुर्गं समाश्रयेत् ॥ १११ ॥

सरीसृपविहीनं च व्यालतस्करसंयुतम् ।
एवंविधं यथालाभं राजा विषयमाविशेत् ॥ ११२ ॥

तत्र दुर्गं नृपः कुर्यात् षष्ट(ण्णा ? )मेकतमं बुधः ॥ ११३ ॥

षड्भेदानेवाह—

धन्विदुर्गं महीदुर्गं नरदुर्गं तथैव च ।
वार्क्षं चैवाम्बुदुर्गं च गिरिदुर्गं तथैव च ॥ ११४ ॥

षण्णां मध्ये गिरिदुर्गे विशेषमाह—

सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते ।
दुर्गं च परिखोपेतं वप्राट्टालकसंयुतम् ॥ ११५ ॥

शतघ्नीयन्त्रमुख्यं(श्च) शतशस्तु समावृतम् ।
गोपुरं सकपाटं च तत्र स्यात्सुमनोहरम् ।
सपताको गजारूढो येन राजा विशेत्सर्वं( शेत्स्वयम ? ) ॥ ११६ ॥

तस्य मध्ये तु पर्याप्तं कारयेद्गृहमात्मनः ।
गुप्तं सर्वर्तुकं शुभ्रं जलवृक्षसमन्वितम् ॥ ११७ ॥

तदुक्तं मात्स्ये—

इत्येवमेतैः सकलैरुपेतैर्द्रव्यैः पराध्यैः परिरक्षितः स्यात् ।
राजा वसेत्तत्र गृहे सुशुभ्रे गुणान्विते लक्षणसंप्रयुक्ते ॥ ११८ ॥

तत्र दुर्गे इत्यर्थः । अथ दुर्गेषु स्थलविभागमाह—

चतस्रश्च तथा तत्र कार्यास्त्वायतवीथयः ।
एकस्मिंस्तत्र वीथ्यग्रे देववेश्म भवेद्दृढम् ॥ ११९

वीथ्यग्रे च द्वितीये तु राजवेश्म विधीयते ।
धर्माधिकरणं कार्यं वीथ्यग्रे च तृतीयके ॥ १२० ॥

चतुर्थे चैव वीथ्यग्रे गोपुरं तु विधीयते ।
आयतं चतुरस्रं वा वृत्तं वा कारयेत्पुरम् ॥ १२१ ॥

अन्तहीनं त्रिकोणं च यवमध्यं तथैव च ।
अर्धचन्द्रप्रकारं च वज्राकारं च कारयेत् ॥ १२२ ॥

अर्धचन्द्रं प्रशंसन्ति नदीतीरेषु तद्वसेत् ।
अन्यत्र तु न कुर्वीत प्रयत्नेन विजानता ॥ १२३ ॥

राज्ञा कोशगृहं कार्यं दक्षिणे राजवेश्मतः ।
तस्यापि दक्षिणे भागे गजस्थानं विधीयते ॥१२४ ॥

गजानां प्राङ्मुखी शाला कर्तव्या वाप्युदङ्मुखी ॥ १२५॥

आग्नेये च तथा भागे आयुधागारमिष्यते ।
महानसं च धर्मज्ञकर्मशाला तथापरा ॥ १२६ ॥

गृहं पुरोधसः कार्यं वामतो राजवेश्मनः ।
मन्त्रिदेववविदां चैव चिकित्साकर्तुरेव च ॥ १२७ ॥

तत्रैव च महाभाग गृहाणि च विधारयेत् ।
गवां स्थानं तथैवात्र तुरगाणां तथैव च ॥ १२८ ॥

उत्तराभिमुखा श्रेणी तुरगाणां विधीयते ।
दक्षिणाभिमुखा चाथ परिशेषास्तु गर्हिताः ॥ १२९ ॥

तुरङ्गशालायां विशेषमाह--

तुरङ्गास्ते तथा कार्याः प्रदीपः सर्वरात्रिकः ।
कुक्कुटान्वानरांश्चैव मर्कटांश्च नराधिप ॥ १३० ॥

गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमः ।
अस्तंगते न कर्तव्यो देवदेवे दिवाकरे ॥ १३१ ॥

दुर्गे तत्र यथास्थानं राजा विज्ञाय सारथीन् ।
दद्यादावसथस्थानं सर्वेषामनुपूर्वशः ॥ १३२ ॥

योधानां शिल्पिनां चैव सर्वेषामविशेषतः ।
दद्यादावसथान्दुर्गे मन्त्रकालविदान्(दः) शुभान् ॥ १३३ ॥

गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च ।
आहरेत बलं राजा दुर्गे परबला रुजः ॥ १३४ ॥

कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते ।
बहूनां च न वै दुर्गे विना कार्यं ततो भवेत् ॥ १३५ ॥

स्थलविभागमुक्त्वा दुर्गसंपत्तिमाह--

दुर्गे तु यन्त्राः कर्तव्या नानाप्रहरणान्विताः ।
सहस्रघातिनो राजंस्तैस्तु रक्षा विधीयते ॥ १३६ ॥

दुर्गद्वाराणि गुप्तानि कार्याण्यपि च भूभृता ।
संग्रहश्चात्र सर्वेषामायुधानां च शस्यते ॥ १३७ ॥

धनुषां क्षेपणीया(या)नामायुधानां च शस्यते ।
शराणामथ खड्गानां कवचानां तथैव च ॥ १३८ ॥

कणपानां त्रिशूलानां पट्टिशानां तथैव च ।
प्रासानां चैव शस्त्राणां शक्तीनां च तथैव च ॥ १३९ ॥

परश्वधानां चक्राणां चमणां वर्मभिः सह ।
कुठाररुजु( रज्जु ?) वेत्राणां पट्टिकानां तथेव च ॥ १४० ॥

हेतुकानां च देवानां मङ्गलानां च संशयः ।
सर्वेषां शिल्पिभाण्डानां संचयस्तत्र चेष्यते ॥ १४१ ॥

वादित्राणां च सर्वेषामोषधीनां तथैव च ।
यवसानां प्रभूतानां इन्धनानां तथैव च ॥ १४२ ॥

गुडस्य सर्वतलानां गोरसानां तथैव च ।
वसानामथ मज्जानां स्नायूनामास्थिभिः सह ॥ १४३ ॥

गोचर्मपटहानां च धान्यानां सर्वतस्तथा ।
तथैवाभ्रपठानां ( ? ) च यवगोधूमयोरपि ॥ १४४ ॥

सणसर्जरसं भूर्जं जतुलाक्षा च टङ्कणम् ।
राजा संचिनुयाद्दुर्गे यच्चान्यदपि किंचन ॥ १४५ ॥

रत्नानां सर्वलोहानां वस्त्राणां चाप्यशेषतः ।
कोद्रवमुद्गमाषाणां चणकानां तिलैः सह ॥ १४६ ॥

तथा च सर्वसस्यानां पांसुगोमययोरपि ।
कुम्भाश्चाशीर्वि( ष )र्युक्ताव्यालसिंहादयस्तथा ॥ १४७ ॥

भृङ्गाश्च पक्षिणश्चैव रक्ष्यास्ते च परस्परम् ।
स्थानानि च विरुद्धानां सुगुप्तानि पृथक् पृथक् ॥ १४८ ॥

कर्तव्यानि महाभाग यत्नेन पृथिवीभुजा ।
उक्तानि चाप्यनुक्तानि राजा द्रव्याण्यनेकशः ॥ १४९ ॥

सुगुप्तानि पुरे कुर्याज्जनानां हितकाम्यया ।
उक्तानि चाप्यनुक्तानि ॥ १५० ॥

विषाणां वारकं कार्यं प्रयत्नेन महीभुजा ।
विचित्राः श्वापदा कार्या विषस्य शमनास्तथा ॥ १५१ ॥

रक्षोभूतपिशाचानां परघ्नाः पुष्टिवर्धनाः ।
कलाविदग्धपुरुषा दुर्गे धार्याः प्रयत्नतः ॥ १५२ ॥

भीतान्क्रुद्धान्प्रमत्तांश्च तथैव च विमानितान् ।
कुभृत्यान्पापशीलांश्च न राजा वासयेत्पुरे ॥ १५३ ॥

औषधानि च सर्वाणीत्युक्तं तानि मत्स्यपुराणोक्तानि ज्ञेयानि—

यन्त्रायुधाट्टालचयोपपन्नं समग्रधान्यौषधिसंप्रयुक्तम् ।
वणिग्जनैश्चावृतमावसेत दुर्गं सुगुप्तं नृपतिः सदैव ॥ १५४ ॥

इति दुर्गनिरूपणम् । दुर्गप्रसङ्गाद्दुर्गाध्यक्षलक्षणमाह—

अनाहार्यश्च शूरश्च वाग्मी प्राज्ञः कुलोद्गतः ।
दुर्गाध्यक्षः स्मृतो राज्ञ उद्युक्तः सर्वकर्मसु ॥ १५५ ॥

गजानां प्राद्भुर्भुवी शालेत्युक्तं तदर्थं गजभेदांस्तत्प्रशंसामाह—

यतो गजैर्विना राज्ञां राजशोभा न जायते ।
जयप्रतापसैन्यस्य रक्षा तस्मादिहोच्यते ॥ १५६ ॥

पुरा स्वर्गे सुखेनासन् कामगाः खेचरा गजाः ।
मुनिशापाद्गता भूमौ ततो जाता वनेचराः ॥ १५७ ॥

गजभेदानाह—

भद्रो मन्द्रो मृगो मिश्रश्चतुर्धा जायते गजः ।
त्रयो युगत्रयेभूवन्मिश्राः कलियुगे गजाः ॥ १५८ ॥

यतः सत्यं ततो धर्मो यतो धर्मस्ततो धनम् ।
यतो रूपं ततः शीलं यतो नागास्ततो जयः ॥ १५९ ॥

यद्वद्वदन(वनम)सिंहं च यद्वद्राष्ट्रमपार्थिवम् ।
यद्वच्छौर्यमशस्त्रं च तद्वत्सैन्यमकुञ्जरम् ॥ १६० ॥

प्राकारगोपुराट्टालकपाटोद्घाटनादिषु ।
भञ्जने मर्दने चैव नागा वज्रोपमाः स्मृताः ॥ १६१ ॥

शरजालाश्रितमुखः कोन्यः शक्तः परं गजात् ।
हन्तुं प्राकारमुन्मथ्य रथाश्वनरकुञ्जरान् ॥ १६२ ॥

एकशक्तिप्रहारेण म्रियन्तेश्वा नरोपि च ।
सहेन्महाप्रहाराणां शतं युद्धेषु वारणः ॥ १६३ ॥

चीत्कारैर्नाशयन्तः स्वपतिभटमनो मोदयन्तो मदाढ्याः
संग्रामसीम्नि खिलबहलतां बाढमाढौकमानाः ।
शुण्डादण्डप्रहारैः परमपि च बलं कम्पयन्तः परेषां
येषां सर्वे गजेन्द्रा भुवि विजयविधौ ते मता भूमिपालाः ॥ १६४ ॥

चलन्ति येषां न शतं गजेन्द्राः पुरःप्रयाणे चलशैलतुल्याः ।
वाञ्छन्ति चैवं विजयं कथं ते राजेति शब्दं च कथं भजन्ते ॥१६५॥

तावद्गर्जन्ति वीर्यात्परनिधनविधौ युद्धमध्येपि वीरा-
स्तावद्धावन्ति वेगं परमपि दधतः संमुखीनास्तुरङ्गाः ।
शूरारूढः सुसज्जो मदमुदितमान( मनो ? ) मानमानं विधुन्वन्
यावन्नायाति कोपात्कृतविविधरवाटोप एकोपि नागः ॥ १६६ ॥

मातङ्गैरपि यैर्महेन्द्रभवनं पुण्याधिकं जन्यते
यैः श्यामैरपि सर्वलोकमहिता कीर्तिः समातन्यते ।
यैर्मत्तैरपि सङ्गरे रिपुमदः शोषं समानीयते
तेमी भाग्यवतः प्रयान्ति पुरतः स्तम्बेरमा भूपतेः ॥ १६७ ॥

इति प्रशंसा। भद्रादिलक्षणानि—

प्रतिमानेषु विपुलश्चारुपृष्ठायताननः।
मुखे सुरभिनिश्वासस्ताम्रजिह्वोष्टतामुकः॥ १६८॥

तथास्य तुल्यसंस्थानौ दन्तौ शुभ्रौ विशेषतः।
मधुपिङ्गलनेत्रश्च महाकायो महाबलः॥ १६९॥

पुरस्तादुच्छ्रितश्चापि पश्चादवनतोपि यः।
धनुर्विनतविंशश्च(?)समपादतलः शुभः॥ १७०॥

विंशत्या च नखैर्युक्ता अष्टादशभिरेव वा।
विद्युद्दावाग्निसिंहेभ्यो न बिभेत्यंशुके(कृशा)दपि॥ १७१॥

अन्वर्थवेदी शू(र)श्च क्षमावान्नच कर्कशः।
कल्याणमेधास्तेजस्वी भद्रः स परिकीर्तितः॥ १७२॥

अथ मन्दः--

महाग्रीवो महावक्त्रो महाप्रोथो महोदरः।
पि(पी)नोरुवंशः सान्द्रत्वक्सुविभक्तो महासुरः॥ १७३॥

बहलैर्बहुभिर्दीर्घैर्युक्तः स्निग्धतनूरुहैः।
स्थिरैः स्थिराक्रान्ततलैः पादैश्च पृथुभिः समैः॥ १७४॥

स्थिरस्निग्धे विशाले च पीने चापि प्रकीर्तित।
विषाणे तस्य विद्वद्भिरोष्ठो दीर्घश्च रोमशः॥ १७५॥

कूर्मसंस्थानगमनो मन्दो मन्दगतिक्रमः।
संमील्य लोचने नित्यं निद्रान्ध इव गच्छति॥ १७६॥

मृगः--

तनुत्वक्कर्णपादो यः स्तब्धास्यस्तनुमेहनः।
तनुवंशोदरश्चैव तनुव्यक्ततनूरुहः॥ १७७॥

दीर्घजिह्वविषाणश्च दीर्घगात्रस्तथा च सः ।
प्रध्वस्तरोमकर्णश्च पुरस्ताच्चापि संवृतः ॥ १७८ ॥

निपाते गोचरस्थाने याया शय चा(?)निर्वृतः ।
ह्रस्वश्रवणलाङ्गूलो दीर्घं विक्रमते क्रमैः ॥ १७९ ॥

पुनः पुनश्च विनदन् दुर्गतिश्चापि धावति ॥ १८० ॥

अथ मिश्रलक्षणम्—

बह्वाशी बह्वलीकश्च दण्डपातेषु चाक्षमः ।
गच्छत्प्रकृष्टवेगश्च भारं प्राप्यावसीदति ॥ १८१ ॥

कृच्छ्राच्चाप्यायते नागः क्षिप्रं च परिहीयते ।
बह्वम्ललवणश्चापि रुक्षश्चातुरतां व्रजेत् ॥ १८२ ॥

नित्यं च सान्त्वयेदेनं न चैनमभितापयेत् ।
सर्वेषां लक्षणैः कैश्चिद्युक्तो मिश्रो भवेद्गजः ॥ १८३ ॥

शरतोमरवज्रैश्च गजस्कन्धहता नराः ।
क्षणात्स्वर्गं प्रयन्त्येव तस्मात्स्वर्गोपमा गजाः ॥ १८४ ॥

इत्येवं पूर्वोक्तसंपत्तिमाहिते दुर्गे राजा सुखं वसेत् । इति साङ्गदुर्गनिरूपणम् । अथ बाल( ल )निरूपणम् । तच्च( ब )लं षाड्विधम्—

षड्विधं तु बलं व्यूह्य द्विषतोभिमुखं व्रजेत् ॥ १८५ ॥

इति षाड्विधं बलम् । तद्यथा—

मौलं भूतं श्रेणि सुहृद् द्विषदाटविकं बलम् ।
पूर्वं पूर्वं गरीयस्तु बलानां विषमं स्मृतम् ॥ १८६ ॥

अस्यार्थः। मौलं परंपरागतम्। भूतं यावद्विभवस्थायि। श्रेणि गमनमार्गे स्थाने निवेशि(तं?)। सुहृन्मित्रबलम्। द्विषदधीनं जातं यत्तद् द्विषत्। आटविकं अरण्यसंबन्धि। उक्तस्य च तस्य चतुरङ्गत(ता)माह---

हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुर्विधम्॥ १८७॥

इति बलम्। बलस्य सेनापत्यधीनत्वात् सेनापतिलक्षणमाह--

कुलीनः शीलसंपन्नो धनुर्वेदविशारदः।
हस्तिशिक्षादिकुशलो नित्यं हि श्लक्ष्णभाषितः॥ १८८॥

निमित्ते शकुनज्ञाने वेत्ता चैव चिकित्सके।
कृतज्ञः कर्मणां शूरस्तथा क्लेशसहो रु( ह्रस्त्रृ )जुः॥ १८९॥

व्यूहतत्त्वविधानज्ञः फल्गुसारविशेषतः।
राज्ञा सेनापतिः कार्यो ब्राम्हणः क्षत्रियोथवा॥ १९०॥

एवं ये कुशलं शूरं हिते स्थितमकल्मषम्।
सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून्॥ १९१॥

बृहस्पतिसमं बुध्या क्षमया पृथिवीसमम्।
समुद्रमिवगाम्भीर्ये हिमवन्तमिवाचलम्॥ १९२॥

प्रजापतिमिवौदार्ये तेजसा भास्करोपमम्।
महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः॥ १९३॥

इति सेनापतिलक्षणम्।

हस्तिशिक्षाविधानज्ञो वनजाति( वि )शारदः।
क्षेळा( क्लेश)क्षमस्तथा राज्ञो गजाध्यक्षः प्रशस्यते॥ १९४॥

एतैरेव गुणैर्युक्तः स्थविरस्य(श्च) विशिष्यते।
गजारोही नरेन्द्रस्य सर्वकर्मसु शस्यते॥ १९५॥

अश्वाध्यक्ष:--

हयशिक्षाविधानज्ञोऽश्वचिकित्सितपारक:(ग:) ।
अश्वाध्यक्षो महीभर्तु: श्वा(स्वा)मनस्य(श्व)विशिष्यते ॥ १९६ ॥

अथ राजभूषणे समाङ्गनिरूपणम् । अथ राजकृत्यनिरूपणम्---

विचिन्त्य कार्याणि निशावसाने विद्वत्सुहृन्मण्डलमिश्रितानाम् ।
बलार्थदेशेषु नियोजितानां समाश्रितानां च कृताकृतानि ॥ १९७ ॥

स वेणुवीणापटहस्वनानां गीतेन पूर्वं व्यपनीतनिद्रः ।
शय्यां त्यजेत्पूर्वनिशावसाने शृण्वन्गिरो मङ्गलपाठकानाम् ॥ १९८ ॥

तदुत्तरमाह्निकोक्तरीत्या शौचदन्तधावनानि कुर्यात् । तदुक्तं मनुना--

प्रातरुत्थाय नृपतिः कुर्याद्दन्तस्य धावनम् ॥ १९९ ॥

शृण्वन्गिर इत्यनेन प्राचोऽधिकादिपव(ठ)नमप(पि) ज्ञेयम् । ततश्चादर्शदर्शनपूर्वकं श्मश्रु-संस्कार: । अनन्तरं दैवज्ञमुखात्पञ्चाङ्गश्रवणम् ।

श्रुत्वा तिथीभग्रहवासरं च प्राप्नोति धर्मार्थयशांसि सौख्यम् ।
आरोग्यमायुर्विजयं जयं च दुःस्वप्ननाशं च तथा विदध्यात् ॥ २०० ॥

ततश्च---

प्रणम्य देवांश्च गुरूंश्च सर्वान्दत्त्वा च गां वत्सयुतां द्विजाय ।
दृष्ट्वा मुखं सर्पिषि दर्पणे च सर्पिश्च दद्यात्सहिरण्यमेव ॥ २०१ ॥

ततः प(पर)राष्ट्रभेदादिग्रहणार्थं चारान्प्रेषयेत् । तदाह कामन्दक:---

प्रेषयेच्च ततश्चारान् देशेष्वन्येषु सादरम् ॥ २०२ ॥

तेषां लक्षणमाह मात्स्य: (त्स्ये)---

अनाहार्यान्क्लेशसहान् नियुञ्जीत सदा नवान् ।
जनस्याविदितान्सौम्यांस्तथाज्ञातान्परस्परम् ॥ २०३ ॥

कथिताः सततं राजन् राजानश्चारचक्षुषः ।
स्वके देशे परे देशे ज्ञानशीलान्विचक्षणान् ॥ २०४ ॥

वणिजो मन्त्रकुशलान् सांवत्सराचिकित्सकान् ।
तथा प्रव्राजिताकारां(श्चारान्राजा नियोजयेत्) ॥ २०५ ॥

न च(चा)स्य रा(राजा)श्रद्दध्याच्चारस्य प्रियभाषितः(तम्) ।
द्वयोः संबन्धमाज्ञाय श्रद्दध्यान्नृपतिस्ततः ॥ २०६ ॥

परस्परस्याविदितौ यदि स्यातां चरावुभौ ।
तस्माद्राजा प्रयत्नेन गूढांश्चारान्नियोजयेत् ॥ २०७ ॥

तपस्विलिङ्गिनो धूर्ताः पण्याशिल्पोपजीविनः ।
चाराश्चरेयुः परितः पिबन्तो जगतो जनः (नान्) ॥ २०८ ॥

निर्गच्छेयुर्विशेयुश्च सर्ववार्ताविदो ह्यतः ।
चाराः सकाशं नृपतेश्चक्षुर्दूरचरं हि तत् ॥ २०९ ॥

सूक्ष्मसूत्रप्रचारेण पश्येद्विविधचेष्टितम् ।
स्वपन्नपि हि जागर्ति चारचक्षुर्महीपतिः ॥ २१० ॥

कामन्दकोऽपि--

अनेनासंपतोमूढा(तन्मार्गा)त्पतत्यन्ध(न्धः) समेपि हि ।
सर्वसंपत्समुदयं सर्वावस्थाविचेष्टितम् ।
चरेण विद्विषां विद्यादुद्देशप्रार्थनादि वा ॥ २११ ॥

इति । तन्नियोगे च तेषामपि स्वरूपज्ञानं भवति—
विश्रम्भेणापि च प्रेम्णा यदाज्ञापयति प्रभुः ।
तस्य कर्ता स एव स्याद्गुणीभूतस्तु शंकरः ॥ २१२ ॥

कर्तव्यं भृत्यवर्गाय स्वामी चेन्न समादिशेत् ।
अस्मिमाम्नोति कस्तर्हि तस्य ज्ञास्यति पौरुषम् ॥ २१३ ॥

ततश्च—

ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ।
दृष्ट्वा ज्योतिर्विदो वैद्यान् दत्त्वा गां काञ्चनं महीम् ॥ २१४ ॥

सभां प्रविशेदिति । पुरोहितादीनां लक्षणान्याह--

वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्वादपरो नित्यं एष राजपुरोहितः ॥ २१५ ॥

अ(थ) धर्माधिकारी—

समः शत्रौ च मित्रे च धर्मशास्त्रविशारदः ।
विप्रमुख्यः कुलीनश्च धर्माधिकरणी(णे) भवेत् ॥ २१६ ॥

अथ ज्योतिर्वित्—

यत्प्रोक्तं त्रिपुरान्तकेन बहुधा शास्त्रं स्वराणां द्विज-
स्तत्राभ्यासरतो जितेन्द्रियचयः शास्त्राभिभाषी च यः ।
स्पृष्टं कर्म दिवौकसां सुगु(ग?)णिनाज्जानाति निःसंशयम्
तस्यादेशविधायिनि क्षितिपतौ स्थैर्यं जयश्रीर्भवेत् ॥ २१७ ॥

व्यक्ताङ्कः फलकालवित् सुकृतवान्पूर्वापरस्माकरः(रकः)
पाटीकुट्टकबीजशास्त्रचतुरः सिद्धान्तवित्प्राञ्जलिः ।
वर्णावर्णसवर्णनैकगु(ग)णनं भूयो महानुद्यमी
सम्यग्जातकसिद्ध एव गणकः श्लाघ्यो विदां नापरः ॥ २१८ ॥

भिषक्—

पारम्पर्यागतो यः स्यादष्टाङ्गेषु चिकित्सिते ।
अनाहार्यः स वैद्यः स्यात् धर्मात्मा च कुलोद्गतः ॥ २१९ ॥

प्राणाचार्यः स विज्ञेयो वच(स्तस्य च भू)भुजा ।
राजन्राज्ञा सदा कार्यं यथा कार्यं पृथग्जनैः ॥ २२० ॥

सभाप्रवेशः—

स्मितप्रसन्नः प्रथमाभिभाषितैः प्रसादद्दष्ट्या(ष्ट्या) करसंग्रहैश्च ।
यथानुकूलं हृदयान्यपि द्विषां प्रसादयन्धर्मसभां प्रवेशयेत् ॥ २२१ ॥

तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ।
विसृज्य च प्रजाः सर्वा मन्त्रयेत्सह मन्त्रिभिः ॥ २२२ ॥

खड्गधारिणो निकटवर्तित्वात्तल्लक्षणमाह—

सुरूपस्तरुणः प्रांशुर्दृढभक्तः कुलोद्भवः ।
शूरश्चैव सहश्चैव खड्गधारी प्रकीर्तितः ॥ २२३ ॥

अथ रक्षिणः—

प्रांशवो व्यायताः शूरा दृढभक्ता निराकुलाः ।
राज्ञा तु रक्षिणः कार्याः सदा क्लेशसहा हिताः ॥ २२४ ॥

ताम्बूलधारी—

अनाहार्योऽनृशंसस्य(श्च) दृढभक्तिश्च पार्थिवे ।
ताम्बूलधारी भवति नारी वाप्यथ तद्गुणा ॥ २२५ ॥

अत्रैव प्रसङ्गात्सकलसाधारणं सेवकलक्षणमुच्यते—

ताडितोऽपि दुरुक्तोऽपि दण्डितोऽपि महीभुजा ।
न चिन्तयति यः पापं स भृत्योऽर्हो महीभुजाम् ॥ २२६ ॥

भर्तुरर्धासनं रथैर्मुहुर्नान्यत्र तिष्ठति (निक्षिपेत्) ।
(ब्रूयान्न किंचिदन्योन्यं तिष्ठेच्चास्यं विलोकयन्) ॥ २२७ ॥

कोन्तेत्यहमिति ब्रूयात्सम्यगाज्ञापयेति वा ।
आज्ञां चावितथां कुर्याद्यथाशक्त्यविलम्बितम् ॥ २२८ ॥

तथा कृतमतः —

उच्चैः प्रहसनं कासं ष्ठीवनं कुत्सनं तथा ।
जृम्भणं गात्रभङ्गं च परी(र्व)स्फोटं च वर्जयेत् ॥ २२९ ॥

प्रविश्य सानुरागस्य चित्तज्ञः स्याच्च संमतः ।
समर्थयञ्च तत्पक्षं साधु भाषेत भाषिते ॥ २३० ॥

तन्नियोगेन वा ब्रूयादर्थं सुपरिनिश्चितम् ।
सुखप्रश्नकथागोष्ठीषु विवादं वादिनां मतः ॥ २३१ ॥

विजानन्नपि न ब्रूयाद् भर्तुः क्षिप्तोत्तरं वचः ।
प्रवीणोऽपि च मेधावी वर्जयेदभिमानिताम् ॥ २३२ ॥

यदप्युच्चैर्विजानीयान्नीचैस्तदपि कीर्तयेत् ।
कर्मणां तस्य वैशिष्ट्यं कथयेद्विनयान्वितः ॥ २३३ ॥

आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।
अपृष्टोऽपि हिना(ता)न्वेषी ब्रूयात्कल्याणभाषितम् ॥ २३४ ॥

ये शूरा ये च विद्वांसो ये च मेधाविपश्चितः ।
ये(ते)षामेव विकाशिन्यो भोग्या नृपतिसंपदः ॥ २३५ ॥

अनुकूलं प्रियं तस्य वक्तव्यं जनसंसदि ।
रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् ॥ २३६ ॥

अन्तःपुरधनाध्यक्षैर्वैरिदूतैः पराकृतैः ।
संसर्गं न व्रजेत्प्राज्ञो विना पार्थिवशासनात् ॥ २३७ ॥

दुष्कृत्यं हि नरेन्द्रस्य न च संकीर्तयेत्क्वचित् ।
वस्त्रमस्त्रमलंकारं राज्ञा ध(द)त्तं च धारयेत् ॥ २३८ ॥

शाब्दलौल्यं च पैशुन्यं नास्तिक्यं क्षुद्रता तथा ।
चापल्यं च परित्याज्यं नित्यं राज्ञानुजीविभिः ॥ २३९ ॥

इति सर्वसाधारणसेवकवृत्तिः । अथ सभासदः—

धर्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः ।
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥ २४० ॥

तस्मात्सभ्यः सभां गत्वा रागद्वेषविवर्जितः ।
वचस्तथाविधं ब्रूयादन्यथा नरकं व्रजेत् ॥ २४१ ॥

नीतिशास्त्रस्य स्पष्टार्थत्वात्तत्क्रमाभिनिवेशः कार्यः—

मेधावी वाक्पटुर्धीमाँल्लघुहस्तो जितेन्द्रियः ।
शस्त्रशास्त्रपरिज्ञाता एष लेखक उच्यते ॥ २४२ ॥

मन्त्रयेत्सहमन्त्रिभिरित्युक्तं तद्वाह—

गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।
अरण्ये नि(निः)शलाके वा मन्त्रयेत्ताभिभावितः ॥ २४३ ॥

मध्यंदिनेऽर्धरात्रे वा विश्रान्तो विगतक्लमः ।
चिन्तयेद्धर्मकामार्थान् सार्धं तैरेक एव वा ॥ २४४ ॥

कन्यानां संप्रदानं च कुमाराणां च रक्षणम् ।
दूतसंप्रेषणं चैव कार्यशेषं तथैव च ॥ २४५ ॥

अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितम् ।
कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्त्वतः ॥ २४६ ॥

अनुरागापरागौ च प्रचारं मण्डलस्य च ।
उपेतारमुपेयं च सर्वोपायांश्च कृत्स्नशः ॥ २४७ ॥

एतत्त्रयं समाश्रित्य प्रयतेतात्मसिद्धये ।
एवं सर्वमिदं राजा सह संमन्त्र्य मन्त्रिभिः ॥ २४८ ॥

चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहुः पण्डितस्तानि(न्नि)बन्धयात्।
अल्पप्रज्ञैः सह मन्त्रं न कुर्यान्न दीर्घसूत्रैरलसैश्चारणैश्च ॥ २४९ ॥

इति। भार्गवोऽपि—

धर्मः प्रागेव चिन्त्यः सचिवगतिमति(?) सर्वदा चिन्तनीयं
ज्ञेयं लोकानुवृत्तं वरचरसूचनं(?)मण्डलं वीक्षणीयम्।
प्रच्छाद्यौ रागरोषौ मृदुकठिणरसौ योजनीयौ स्वकाले
आत्मा यत्नेन रक्ष्यो रणभुवि च परं सोपि नापेक्षणीयः ॥ २५० ॥

उक्तं च—

केन वृत्तेन वृत्तज्ञो वर्तमानो महीपतिः।
सुखेनार्थान्(?)सुखोदर्कानिह च प्रेत्य चाप्नुयात् ॥ २५१ ॥

चरेध(द्ध)र्मानकटुको मुञ्चन्स्नेहं न नास्तिकः।
आनृशंस्यश्चरेदर्थं चरेत्कालमनुद्धतः ॥ २५२ ॥

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः।
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥ २५३ ॥

संदधीत न नाचार्यं विगृह्णीयान्न बन्धुभिः।
नाभक्तं जनयेच्चारं कुर्यात्कार्यमपीडनम् ॥ २५४ ॥

अर्थं न वा सत्सु वदेद्गुणान्ब्रूयान्न चात्मनः।
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥ २५५ ॥

नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत्।
विसृजेन्न स लुब्धेभ्यो विश्वसेन्नापकारिषु ॥ २५६ ॥

अनीषु गुप्तदारः स्याद्रोद्रः स्यादघृणी नृपः।
स्त्रियः सेवेत नात्यर्थमिष्टं भुञ्जीत नाहितम् ॥ २५७ ॥

अस्तब्धः पूजयेदन्यान्गुरून्सेवेदमायया।
अर्चेद्देवानदम्भेन श्रियामिच्छेदकुत्सिताम् ॥ २५८ ॥

सेवेदप्रणयं हित्वा दक्षः स्यात्तत्त्वकालवित् ।
सान्त्वयेन्न च मांघाय अनुगृह्णन्न चक्षपेत् ॥ २५९ ॥

प्रहरेन्नच विद्वत्सु न दहेन्न च शोषयेत् ॥ २६० ॥

तथा च कामन्दकः—

निस्तम्भे निर्गवाक्षेच निर्भेदान्तरसंश्रये ।
प्रासादोपर्यरण्ये च मन्त्रयेताविभावितः ॥ २६१ ॥

नावर्नयेन्नहु(प्रभु ?)र्मन्त्रं संरक्षेत्परितस्तु सन् ।
अरक्ष्यमाणं मन्त्रं हि भिनत्त्यात्मपरंपरा ॥ २६२ ॥

मदः प्रमादः कामस्तु सुप्तिः प्रलपितानि च ।
हन्ति मन्त्रं प्रविच्छि(च्छ)न्नाः कामिन्यांवानिता(वमता)स्तथा ॥२६३॥

द्वादशेति मनुः प्राह षोडशेति बृहस्पतिः ।
उशना विंशातिरिति मान्त्रिणां मन्त्रमण्डलम् ॥ २६४ ॥

यथा समूह(संभव)मित्यन्ये तत्प्रविश्य यथाविधि ।
मन्त्रयेताहितमनाः कार्यसिद्धिवि(वृ)द्धये ॥ २६५ ॥

अकम्पनेन(?) कार्याणि संप्रधार्य पुनः पुनः ।
प्राद्वि(दि)शत्स्वहितान्वेषी मतमेषां पृथक्पृथक् ॥ २६६ ॥

महापक्षो यथाशास्त्रं दृष्टकर्मा हितः सुधीः ।
यद्यथायान्नतारुढस्तत्तत्साधु समाचरेत् ॥ २६७ ॥

नातीयात् कार्य(कालं) हि कृत्वा मन्त्रविनिश्चयम् ।
अतिक्रान्तं तु तं भूयो यथायोगं प्रकल्पयेत् ॥ २६८ ॥

न कार्यकालं मतिमानतिक्रामेत कर्हिचित् ।
(कथं)चिदेव भवति कार्ये योगः सुदुर्लभः । २६९ ॥

सतां मार्गेण मतिमान् काले कर्म समाचरेत् ।
काले समाचरन् साधुरसत्र(कृ)त्फलमश्नुते ॥ २७० ॥

इति मन्त्रबलान्महीपतिर्महतो दुष्टभुजङ्गमानिव ।
विनयेन्नयमार्गमास्थितो वशमुद्योगसमन्वितो रिपून् ॥ २७१ ॥

ततश्च—

कृतमन्त्रस्तु मन्त्राज्ञो मन्त्रिणां मन्त्रसंमतम् ।
यातव्याय प्राहिणुयाद्दूतं दूत्याभिमानिनम् ॥ २७२ ॥

प्रगल्भः स्मृतिमान् वाग्मी शस्त्रे शास्त्रे च निष्ठितः ।
अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति ॥ २७३ ॥

स दूतः शासनाद्गच्छेद्गन्तव्यमुत्तरोत्तरम् ।
स्वराष्ट्रपरराष्ट्राणामिति चेति च चिन्तयन् ॥ २७४ ॥

नाविज्ञातः प(पु)रं शत्रोः प्रविशेच्च न संसदि ।
कालमीक्षेत कार्यार्थं अनुज्ञातस्य(श्च) निष्पतेत् ॥ २७५ ॥

सारवत्तां च राष्ट्रं यद्दुष्कृतिं गुप्तमेव च ।
छिद्रं शत्रोर्विजानीयात्कोशमित्रबलानि च ॥ २७६ ॥

दूतकारणमाह कामन्दकः –

पृच्छ्यमानोपि न ब्रूयात्स्वस्वामिप्रकृतिच्युतम् ।
ब्रूयात्प्रसृतया वाचा सर्वं वेद भवानिति ॥ २७७ ॥

कुलेन नाम्ना स्तोत्रेण कर्मणा च महीयसा ।
कुर्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि ॥ २७८ ॥

तपस्वी व्यसनोपेतः स्वचरैः सह संवसेत् ॥ २७९ ॥

दूतकर्माह कामन्दकः—

तिष्ठन्वार्ताविशेषांश्च भर्तुः सर्वा निवेदयेत् ।
रिपोः शत्रुपरिच्छेदसुहृद्बन्धुविभेदनम् ॥ २८० ॥

दुर्गकोशबलज्ञानं हयपक्षोपसंग्रहः ।
राज्यान्तरगतानां च आत्मसंस्कारणं तथा ॥ २८१ ॥

युद्धाय सारभूज्ञानं दूतकर्मेति कथ्यते ।
दूतेनैव नरेक(नरेन्द्र)स्तु कुर्वीतारिविकर्षणम् ।
सपक्षे च विजानीयात्परदूतविचेष्टितम् ॥ २८२ ॥

इति दूतकर्म । दूतान्संप्रेष्य किं कुर्यादित्याह—

विश्रम्भी नित्ययुक्तोपि निगूढाकारचेष्टितः ।
प्रियाण्येवाभिभाषेत यत्कार्यं कार्यमेव तत् ॥ २८३ ॥

यदा मन्येत मतिमान् हृष्टं पुष्टं स्वकं बलम ।
परस्य विपरीतं च तदा विग्रहमाचरेत् ॥ २८४ ॥

भूमिर्मित्रं हिरण्यं च विग्रहस्य फलत्रयम् ।
यदेतन्नियतं भावि तदा विग्रहमाचरेत् ॥ २८५ ॥

आगतं विग्रहं विद्वानुपायैः प्रशमं नयेत् ।
विजयस्य ह्यनित्यत्वाद्रभसेन न संपतेत् ॥ २८६ ॥

समाक्रान्तां बलवता काङ्क्षन्नभ्रंशिनीं श्रियम् ।
आश्रयेद्वैतसीं वृत्तिं न भौजङ्गीं कथंचन ॥ २८७ ॥

क्रमाद्वैतसवृत्तिश्च मा(प्रा)प्नोति विपुलां श्रियम् ।
भुजङ्गवृत्तिराप्नोति वधमेव तु केवलम् ॥ २८८ ॥

काले प्राप्ते तु मतिमानुत्तिष्ठेत्क्रूरसर्पवत् ॥ २८९ ॥

प्रसादवृत्त्या हितलोकवृत्तया प्रविश्य शत्रोर्हृदयं निरन्तरम् ।
नयाग्रहस्तेन हि काललुञ्चिते प्रसह्य कुर्वीत कचग्रहां श्रियम्॥२९०॥

कुलोद्गतं सत्यमुदारविक्रमं स्थिरं कृतज्ञं धृतिमन्तमूर्जितम् ।
अतीव दातारमुपेतवत्सलं सुदुःप्रसादं(धं) प्रवदन्ति विद्विषम्॥ २९१ ॥

असत्यता निष्ठुरताकृतज्ञता भयं प्रमादोलसता विषादिता ।
वृथाभिमानो ह्यतिदीर्घसूत्रता तथाङ्गनाक्षादि विनाशनं
स्त्रि(श्रि) यः ॥ २९२ ॥

इति स्म दोषान्वितमाशु विद्विषं त्रिशक्तियुक्तो विजिगीषया व्रजेत्
अतोन्यथा साधुजनस्य संमतः करोति विद्वानुपघातमात्मनः ॥२९३॥

समन्वितो राज्यपदोन्निनीषया चारेक्षणर्वीक्षितमण्डलाक्ष(श)यः ।
इमं नृपो विग्रहमार्गमास्थितः स्थिरोद्यमः संप्रयतेत सिद्धये ॥२९४॥

इति कामन्दकात् । विग्रहकालो विग्रहप्रसङ्गः (?) ।

धीमानुत्साहसंपन्नः प्रभुशक्त्या समन्वितः ।
श्रियः स्यात्परमं पात्रमपामिव महार्णवः ॥ २९५ ॥

नलिनीवाम्बुसंपत्त्या बुध्या श्रीः परिपाल्यते ।
उत्साहव्यवसायाभ्यां विस्तारमुपनीयते ॥ २९६ ॥

लक्ष्मीरुत्साहसंपन्नाद्बुद्धिशुद्धं प्रसर्पतः ।
नापैति कायाच्छायेव विस्तारं सोपगच्छति ॥ २९७ ॥

वीतव्यसनमग्रस्तं(श्रान्तं) महोत्साहं महामतिम् ।
प्रविशन्ति सदा लक्ष्म्यः सरित्पतिमिवापगाः ॥ २९८ ॥

सत्वबुध्युपपन्नोपि व्यसनग्रस्तमानसः ।
स्त्रीभिः षण्ढ इव श्रीभिरलसः परिभूयते ॥ २९९ ॥

उत्थानेनैधयेत्स्वामिन्धनेनेव पावकम् ।
श्रेयो हि सततोत्थायी दुर्बलोऽपि समश्नुते ॥ ३०० ॥

व्यवसायं सदैवान्वियेन्न हि क्लीबवदाचरेत् ।
वसेच्छ्रियं सदोत्थायी सैंहीं वृत्तिं सदा प्रभुः ॥ ३०१ ॥

प्रयत्नप्रेर्यमाणेन महता चित्तहस्तिना ।
रूढवैरिद्रुमोत्खातमकृत्वेह कुतः सुखम् ॥ ३०२ ॥

हेलाकृष्ण(ष्ट)नदित्कान्तिखड्गांशुपरिपिञ्जरः ।
श्रीमत्करिकराकारैराह्रियन्ते भुजैः श्रियः ॥ ३०३ ॥

उच्चैरुच्चैस्तरामिच्छन्पदान्यायच्छते महान् ।
नीचा नीचैस्तरां यान्ति निपातभयशङ्कया ॥ ३०४ ॥

प्रमाणाभ्यधिकस्यापि महः समधितिष्ठतः ।
पदं तु धत्ते शिरसि केसरी मत्तदन्तिनः ।
गतभीर्भीतिजननं वपुर्भोगीव दर्शयेत् ॥ ३०५ ॥

अथ स्वामिविषये पूर्वोक्तामात्यादिकर्माण्याह—

स्वाम्यादिमित्रपर्यन्तं प्राकृतं मण्डलं हि यत् ।
तत्र कर्म प्रवक्ष्यामि व्यसनं च यथाक्रमम् ॥ ३०६ ॥

तत्र अमात्यकर्माण्याह—

आयव्ययौ दण्डनीतिरमात्यप्रतिषेधनम् ।
व्यसनस्य प्रतीकारो राज्ञि राज्याभिषेचनम्( रक्षणम् ) ॥ ३०७ ॥

इत्यमात्यस्य कर्मेदं हन्ति तद्व्यसनान्वितः ।
अमात्यैर्व्यसनोपेतैर्ह्रियमाणो महीपतिः ।
अशक्त एवोत्पतितुं छिन्नपक्ष इवाण्डजः ॥ ३०८ ॥

अमात्यकर्माण्याह––

हिरण्यं धान्यवस्त्राणि वाहनानि तथैव च ।
तथान्ये द्रव्यनिचयाः (प्रजातः संभवन्ति हि) ॥ ३०९ ॥

स्थैर्यं परोपजापश्च दुर्गसंस्कार एव च ।
सेतुबन्धो वणिक्कर्म प्रजामित्रपरिग्रहः ।
धर्मकामार्थसिद्धिश्च कोशादेतत्प्रवर्तते ॥ ३१० ॥

अन्वीक्षणं च विद्यानां स्ववर्णाश्रमरक्षणम् ।
ग्रहणं शास्त्रशस्त्राणां युद्धमार्गेऽपि शिक्षणम् ॥ ३११ ॥

व्यायामः शास्त्रविज्ञानं कर्मणां लक्षणानि च ।
गजाश्वरथपृष्ठेषु यथावत्संप्रवर्तनम् ॥ ३१२ ॥

नियुद्धकौशलं माया परचित्तप्रवेदनम् ।
धूर्तताऽसाधुयुक्तेषु सदसद्वृत्तदर्शनम् ॥ ३१३ ॥

मन्त्रोद्योगोऽनुमन्त्रित्वं तद्रक्षा स्वास्थ्यमेव च
उपेक्षा सामदानं च भेदो दण्डश्च साधनम् ॥ ३१४ ॥

प्रशस्ताध्यक्षसेनानीमन्त्र्यमात्यपुरोधसाम् ।
सम्यक्प्रचारविज्ञानं दुष्टानां चावरोधनम् ।
गतागतपरिज्ञानं दूतसंप्रेषणानि च ॥ ३१५ ॥

धर्मासनं प्रतिष्ठानं राज्यकण्टकशोधनम् ।
अकार्यप्रतिषेधश्च कार्याणां च प्रवर्तनम् ॥ ३१६ ॥

अदण्ड्यतामदण्ड्यानां दण्ड्यानां चापि दण्डनम् ।
उपकार्योपकारित्वमिति वृत्तं महीपतेः ॥ ३१७ ॥

एतत्सर्वममात्यादि राजामात्यपुरःसरः ।
नयत्युन्नतिमुद्युक्तो व्यसनी क्षयमेव तु ॥ ३१८ ॥

तस्मिन्धर्मार्थयोर्व्यग्र(ग्रे) तथा चास्वस्थचेतसि ।
सर्वमेतदशेषेण मन्त्री संधातुमर्हति ॥ ३१९ ॥

मन्त्रिव्यसनोपक्रमाद्राष्ट्रादीनां व्यसनान्याह —

वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।
पानं स्त्री मृगया द्यूतं व्यसनानि महीपतेः ॥ ३२० ॥

मन्त्रिव्यसनम्—

आलस्यं स्तब्धता दर्पः प्रमादोऽनुपकारिता ।
इति पूर्वोक्तदिष्टं च मन्त्रिव्यसनं स्मृतम् ॥ ३२१ ॥

राष्ट्रव्यसनम्—

अतिवृष्टिरनावृष्टिः शलभा मूषिकादयः ।
स्वचक्रकृतदण्डश्च परचक्राणि तस्कराः ॥ ३२२ ॥

राजानीकप्रियोत्सर्गो मरकव्याधिपीडनम् ।
पशूनां मर(णं) रोगो राष्ट्रव्यसनमुच्यते ॥ ३२३ ॥

अथ कोशव्यसनम्—

व्ययीकृतः परिक्षिप्तो भक्षितोऽसंचितस्तथा ।
मूषितो दूरसंस्थश्च कोशव्यसनमुच्यते ॥ ३२४ ॥

अथ दुर्गव्यसनम्—

विशीर्णपर्णप्राकारपरिखाम्बुविशुष्कता ।
क्षीणघासेन्धनानीह दुर्गव्यसनमुच्यते ॥ ३२५ ॥

अथ बलव्यसनम्—

उपरुद्धं परिक्षिप्तममानितविमानितम् ।
आहतं व्याधितं श्रान्तं दूरयातं नवागतम् ॥ ३२६ ॥

परिक्षीणं प्रतिहतं प्रहताग्रजवं तथा ।
आशानिर्वेदभूयिष्टमहतप्राममेव च ॥ ३२७ ॥

विचित्रस्नावीविधासारं शून्यमूलं तथैव च ।
दुःपार्ष्णिग्राहमन्धं च बलव्यसनमुच्यते ॥ ३२८ ॥

व्यसन्यधोयो व्रजति तस्मात्तत्परिवर्जयेत् ।
हुताशनो जलं व्याधिर्दुर्भिक्षं मरकास्तथा ।
इति पञ्चविधं दैवं व्यसनं मानुषं परम् ॥ ३२९ ॥

दैवं पुरुषकारेण शक्त्या च प्रशमं नयेत् ।
उत्थायित्वेन नीत्या च मानुषं कार्यतत्त्ववित् ॥ ३३० ॥

कोशव्यसनस्य पूर्वोपक्रमात् तद्व्यसने किं भवतीत्याह कामन्दकः—

कोशमूलो हि राजेति प्रवादः सार्वलौकिकः ।
एतत्सर्वं जहातीह कोशव्यसनवान्नृपः ॥ ३३१ ॥

क्षीणं बलं वर्धयति स्वतो गृह्णाति च प्रजाः ।
कोशवान्पृथिवीपालः परैरप्युपजीव्यते ॥ ३३२ ॥

मित्रामित्राहिरण्यानां भूमीनां (च) प्रसारणम् ।
दुरकार्याशुकारित्वं लब्धस्य परिपालनम् ॥ ३३३ ॥

कोशादेतत्प्रभवति याति तद्व्यसने क्षयम् ॥ ३३४ ॥

पूर्वोक्तव्यसनमध्ये अमात्यव्यसनं गुरुतरमित्याह—

अमात्याद्याः प्रकृतयो भिन्नं तद्राष्ट्रमुच्यते ।
अशेषराज्यव्यसनात्पार्थिवव्यसनं गुरु ।
तस्मादमात्यव्यसनात्प्यते... (?) ॥ ३३५ ॥

चतुर्विधं व्यसनं परित्यज्य स्वयमेव राज्यं कुर्यात्—

राज्ञो व्यसनिराज्यस्य व्यवसायो हि न क्षमः ।
न राज्यव्यसनायेह समग्रं राज्यमूर्जितम् ॥ ३३६ ॥

अथामात्यव्यसनतः कोशानां दण्डामित्रयोः ।
व्यसनेभ्यः समुन्नेता राजा यः स त्रिवर्गभाक् ॥ ३३७ ॥

तान्येव व्यसनान्याह—

वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।
पानं व्यसनतत्त्वज्ञैश्चतुर्विधमुदाहृतम् ॥ ३३८ ॥

तत्र वाक्पारुष्यम्—

वाक्पारुष्यं परं लोके उद्वेजकमनर्थकम् ।
न कुर्यात्प्रियया वाचा प्रकुर्याज्जगदात्मसात् ॥ ३३९ ॥

अकस्मादेव यः कोपादभीक्ष्णं बहु भाषते ।
तस्मादुद्विजते लोकः सस्फुलिङ्गादिवानलात् ॥ ३४० ॥

हृदये वागसिस्तीक्ष्णो मर्म च्छिन्दन्नतन्मुहुः ।
तेजस्विनां दीपयति स दीप्तो याति वैरिताम् ॥ ३४१ ॥

नोद्वेजयेज्जगद्वाचा रूक्षवाचाप्रियो भवेत् ।
प्रायेण प्रियकृत्कर्मा कृपणोऽपि हि सेव्यते ॥ ३४२ ॥

अथ दण्डपारुष्यम्—

असिद्धसाधनं सद्भिः शासनं दण्डमुच्यते ।
तदुक्त्यैव नयेद्दण्डं युक्तदण्डः प्रशस्यते ॥ ३४३ ॥

उद्वेजयति भूतानि दण्डपारुष्यवान्नृपः ।
भूतान्युद्वेज्यमानानि द्विषतां यन्ति संश्रयम् ॥ ३४४ ॥

आश्रिताश्चैव लोकेन विवृद्धिं यान्ति विद्विषः ।
विवृद्धाश्च विनाशाय तस्मान्नोद्वेजयेत्प्रजाः ॥ ३४५ ॥

महत्स्वप्यपराधेषु दण्डं प्राणान्तिकं त्यजेत् ।
ऋते राज्यापहारात्तु युक्तदण्डः प्रशस्यते ॥ ३४६ ॥

अथार्थदूषणमाह—

दूष्यस्य दूषणार्थं च परित्यागो महीयसः ।
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते ॥ ३४७ ॥

तदाकस्मात्समाविष्टः कोपेनातिबलीयसा ।
नित्यमात्महिताकाङ्क्षी न कुर्यादर्थदूषणम् ॥ ३४८ ॥

अथ मृगयाव्यसनम्—

याने क्षोभो यानपातो यानाभिहरणं तथा ।
क्षुत्पिपासाश्रमायासः शीतवातोष्णपीडनम् ॥ ३४९ ॥

अभियानस्य संगत्या यानं व्यसनमुच्यते ।
दुःखं प्रतप्तासिकता कुशकण्टकभूमयः ॥ ३५० ॥

वृक्षसङ्कटतोद्देशाल्लताकण्टकपातनम् ।
वधबन्धपरिक्लेशः सामन्ताटविकादिभिः ॥ ३५१ ॥

स्वसैन्यैश्चास्वसैन्यैश्च परिभिन्नानिवारणम् ।
ऋक्षनागोथ(?)मातङ्गसिंहव्याघ्रभयानि च ॥ ३५२ ॥

वनाग्निधूमसंहारो दिङ्मोहभ्रमणानि च ।
इत्यादि पृथिवीन्द्राणां मृगयाव्यसनं स्मृतम् ॥ ३५३ ॥

मृगयायां गुणा अपि सन्ति कथं व्यसनमेवेत्युक्तम् । तदुक्तम्—

जितश्रमत्वमायाम आममेदकफक्षयः ।
चरास्थिरेषु लक्ष्येषु बाणसिद्धिरनुत्तमा ॥ ३५४ ॥

आमादयो हि जीर्यन्ते योगेनैव दिवानिशम् ।
चरेषु(ष्व)व(च)रलक्ष्ये(षु)बाणासीद्धिश्च जायते ॥ ३५५ ॥

तथाप्यन्ततो दुष्टत्वात्त्याज्यत्याह—

दोषाः प्राणहराः प्रायस्तस्मात्तद्व्यसनं महत् ।
अतः सा परिहर्तव्या राज्ञा भूतिं समीप्सता ॥ ३५६ ॥

अभ्यनुज्ञामप्याह—

अथ चेन्मृगयाक्रीडां वाञ्छेत नगरान्तिके ।
कारयेन्मृगयारण्यं क्रीडार्ते(र्हे)तोर्मनोरमम् ॥ ३५७ ॥

आयामपरिणाहाभ्यामर्धयोजनसंमितम् ।
गिरेरुपान्ते नद्या वा पर्याप्तजलशाद्वलम् ॥ ३५८ ॥

अकण्टकलतागुल्मविषयादपवर्जितम् ।
पादपैः पुष्पफलदैर्विज्ञातैश्चित्तहारिभिः ॥ ३५९ ॥

स्निग्धशीतघनच्छायैर्विकाशैरुपशोभितम् ।
मृगसंघातनिपुणं हस्तिनीकलभान्वितम् ॥ ३६० ॥

अगम्यं रिपुसैन्यानां मानप्रीतिविवर्धनम् ।
तद्वनं चास्य चित्तज्ञैः क्लेशपाशसहैर्दृढैः ।
रक्षितं रक्षिभिः स्वामिर्भूभुजां भूरिभूतये ॥ ३६१ ॥

अन्यकार्याविरोधेन प्रातः संक्रमणक्षमः ।
क्रीडनाय विशेद्राजा तदाप्तैः सहजन्मभिः ॥ ३६२ ॥

यदा च प्रविशेद्राजा क्रीडनार्थं तदा बहिः ।
संनद्धं यत्नतास्तिष्ठद्वलं वनवतश्चिरम् ॥ ३६३ ॥

विधिरेवं समुद्दिष्टो मृगयाक्रीडने परः ।
न गच्छेददन्यथा राजा मृगयायां कदाचन ॥ ३६४ ॥

अथ सर्वव्यसनैः रहितो राजा परं प्रति यायात् । तदुक्तं कामन्दके--

नानाप्रकारैर्व्यसनैर्विमुक्तः शक्तित्रयेणाप्रतिमेन युक्तः ।
परं दुरन्तव्यसनेनपन्नं(नोपपन्नं) यायान्नरेन्द्रो विजयाभिकाङ्क्षी॥३६५

प्रायेण सन्तो व्यसने रिपूणां यातव्यमित्येव समादिशन्ति ।
य(दा) क्षमस्तु प्रसभं निहन्तुं पराक्रमादूर्जितमप्यमित्रम् ॥ ३६६ ॥

तदेव यायादहितान्हि कुर्वन्नप्यन्तराकर्षणपीडनानि ।
संपन्नसस्यं विषयं परस्य यायात्प्रमृद्नन्विजयाय राजा ॥ ३६७ ॥

सस्योपघातेन परस्य वृत्तिच्छेदः स्वस(न्यो)पचयश्च साधु ।
सुवीवृधासारविशुद्धमार्गो विशेद्धरित्रीं द्विषतोप्रमत्तः ॥ ३६८ ॥

समे प्रदेशे विषमे च भूमेर्मिश्रे स्थले वा सुमुखेन यायात् ।
अनातुरः सन्नभयो हि विद्वान्संनद्धगल्को(सैन्यो)
विहितान्ततायः ॥ ३६९ ॥

ग्रीष्मे प्रभूतान्नबलेन यायान्निर्वासनार्थं करिणां यथाम्बु ।
ऋतेम्भसोद्ग्रीष्मकृतात्प्रतापाद्भवन्ति कुष्ठानि मतङ्गजानाम् ॥३७०॥

स्वस्थक्रियाणाममपि कुञ्जराणामूष्मा शरीरमभिजाज्वलीति ।
आयासयोगेन हि संप्रवृद्धः प्रसह्य हन्ति द्विरदान्प्रतापः ॥ ३७१ ॥

सर्वाणि सत्त्वानि खलूष्मकाले विनाम्भुना यान्ति परामवस्थाम् ।
सुगन्धिदानस्रुतिसीकरेषु दन्ताभिघातस्फुटितोपलेषु ॥ ३७२ ॥

गजेषु नीलाभ्रसमप्रभेषु राज्यं निरुद्धं पृथिवीपतीनाम् ।
संकल्पितः संयुगदृष्टमार्गो स्वधिष्ठितो धीरतरेण पुंसाम् ॥ ३७३ ॥

तुरंगमाणां प्र(ति)कल्पितानामेको गजः षष्टिशतानि हन्ति ।
तस्मायतो भूरिजलस्तु पन्था यतोन्नपानोपचितो विशङ्कः ॥ ३७४ ॥

तेनाभियायाज्जनयन्प्रतापं शनैः शनैरश्रमयन्बलानि ।
न ह्युन्नतानामणिनप्युदारं पश्चात्प्रतापं जनयेद्दरीणाम् ॥ ३७५ ॥

तं चाप्रमत्तः प्रसमीक्ष्य यायान्न नाशयेद्दृष्टमदृष्टहेतोः ।
पश्चात्प्रकोपः पुरतः फलं हि पश्चात्प्रकोपश्च ततो गरीयान् ॥ ३७६ ॥

पुरश्च पश्चाच्च यदा समर्थस्तदाभियायान्महते फलाय ॥ ३७७ ॥

अवश्ययातव्ये रिपौ पश्चात्प्रकोपशङ्कायां किं कुर्यादित्याह—

अवश्ययातव्यतयोद्यतः सन्पश्चात्प्रकोपाहितयानशङ्कः ।
सेनापतिं वाप्यथवा कुमारं बलैकदेशेन पुरो निदध्यात् ॥ ३७८ ॥

अभ्यन्तराद्बाह्यकृताच्च दोषादभ्यन्तरस्त्वेव तयोर्गरीयान् ।
आदाय गच्छेत बहिःप्रचारांस्तान्मन्त्रिभिः सम्यगुपाददीत ॥ ३७९ ॥

सामादिभिः संशमयेत्प्रकोपं परस्परावग्रहभेदनैश्च ॥ ३८० ॥

एवं प्रस्थाय किं कुर्यादित्याह—

यायाद्वैरिपुराभ्याशं भूभागे साधुसंमते ।
स्कन्धावारनिवेशज्ञः स्कन्धावारं निवेशयेत् ॥ ३८१ ॥

चतुरस्रं चतुर्द्वारं नातिविस्तारसङ्कटम् ।
साट्टप्रतोलीप्राकारं महाखनिसमावृतम् ॥ ३८२ ॥

शृङ्गाटमर्धचन्द्रं च मण्डलं दीर्घमेव च ।
भूमिप्रदेशसामर्थ्यादाकारमुपकल्पयेत् ॥ ३८३ ॥

विभक्तैश्च विविक्तैश्च पार्श्वैरान्वितमायतः ।
गुप्तं पक्षपुटाकारं महामात्रासमावृतम् ॥ ३८४ ॥

तस्य मध्ये मनोह्लादि महन्मेलवदाहृतः ।
अन्तःकोशबलोपेतं कारयेद्राजमन्दिरम् ॥ ३८५ ॥

मौलीभूतश्रेणिसुहृद्द्विषदाटाविकं बलम् ।
राजहर्म्यं समावृत्य क्रमेण विनिवेशयेत् ॥ ३८६ ॥

अन्तश्चागणितक्रूरालुब्धकादुष्टकर्मणः ।
पर्याप्तवेतनानाप्तान्मण्डले विनिवेशयेत् ॥ ३८७ ॥

हस्तिनो वध्यमानास्तु तुरंगाश्च मनोजवाः ।
गृहोपकण्ठे नृपतेर्वसेयुः स्वामिरक्षिताः ॥ ३८८ ॥

यामवृत्त्या सुसंनद्धं रात्रिंदिवमुदाहृतम् ।
अन्तर्वंशिकसैन्यं च निद्रारात्रिगुप्तये ॥ ३८९ ॥

युद्धयोग्यो महादन्ती संनद्धः साध्ववस्थितः ।
तिष्ठेन्नरपतेर्द्वारि वेगवांश्च तुरंगमः ॥ ३९० ॥

सैन्यैकदेशसंनद्धः सेनापतिपुरःसरः ।
प्रयत्नवान्पारिपतेन्मण्डलेन बहिर्निशि ॥ ३९१ ॥

परसैन्यविनाशार्थं सर्वां भूमिं विनाशयेत् ॥ ३९२ ॥

क्वचित्कण्टकशाखाभिः क्वचित्कीलैरधोमुखैः ।
भू(दू)षयेत्परितो भूमिं प्रच्छन्नैः प्रदरैरपि ॥ ३९३ ॥

इति याननिरूपणं साङ्गतो निरूपितम् ।

अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत् ।
पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत् ॥ ३९४ ॥

नातः परतरो धर्मो नृपाणां यद्रणार्जितम् ।
विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ॥ ३९५ ॥

तत्राहं वादिनं क्लीबं निर्हेतिं परसङ्गतम् ।
न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकं तथा ॥ ३९६ ॥

ब्राम्हणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोरिषु ।
स्याद्राजा भृत्यवर्गेतु प्रजासु च यथा पिता ॥ ३९७ ॥

पुण्यात्षड्भागमादत्ते न्यायेन परिपालयेत् ।
सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ॥ ३९८ ॥

शत्रुतस्करदुर्वृत्तमहासाहसिकादिभिः ।
पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ॥ ३९९ ॥

अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः ।
तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान् ॥ ४०० ॥

ये राष्ट्रेधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।
साधून्संमानयेद्राजा विपरीतांश्च घातयेत् ॥ ४०१ ॥

उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत् ।
स दानमानसत्कारैः श्रोत्रियान्वासयेत्सदा ॥ ४०२ ॥

अन्यायेन नृपो राष्ट्रात् स्वकोशं योभिवर्धयेत् ।
सोचिराद्विगतश्रीको नाशमेति सबान्धवः ॥ ४०३ ॥

प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।
राज्ञः श्रियं बलं प्राणानदग्ध्वा न निवर्तते ॥ ४०४ ॥

य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने ।
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥ ४०५ ॥

किंतु यस्मिन्य आचारो व्यवहारः कुलस्थितिः ।
तथैव परिपाल्योसौ यथावंशमुपागतः ॥ ४०६ ॥

मन्त्रमूलं यतो राज्यमतो मन्त्रं सुरक्षितम् ।
कुर्याद्यथास्य न विदुः कर्मणामाफलोदयात् ॥ ४०७॥

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥ ४०८ ॥

कश्चिद्दैवात्स्वभावाच्च कालात्पुरुषकारतः ।
संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ॥ ४०९ ॥

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥ ४१० ॥

क्रोधं कुर्यान्न चाकस्मान्मृदुवागुपकारिषु ।
एवं च राजा राज्यस्थो यदि श्रेय इहेच्छति ॥ ४११ ॥

अतोन्यथा नरपतिर्भयमभ्येत्यनुत्तमम् ।
इति सर्वान्गुणानेतान्यथोक्तान्योनुवर्तते ।
अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते ॥ ४१२ ॥

उक्तं च भारते—

न पुत्रायतमैश्वर्यं कुर्याद्राजा कथंचन ।
पुत्रार्पितप्रभुत्वो हि धृतराष्ट्रस्तृणोपमः ॥ ४१३ ॥

कामं क्रोधं मदं मानं लोभं हर्षं तथैव च ।
एते वर्ज्याः प्रयत्नेन सुतरां पृथिवीक्षिता ॥ ४१४ ॥

एतेषां विजयं कृत्वा कार्यो भृत्यजयस्ततः ।
कृत्वा भृत्यजयं राजा पौरजानपदान्व्रजेत् ॥ ४१५ ॥

तदुक्तम्—

आत्मानं प्रथमं राजा विनयेनोपपातयेत् ।
ततो भृत्यांस्ततोमात्यांस्ततः पुत्रांस्ततः प्रजाः ॥ ४१६ ॥

कृत्वा तु विजयं तेषां शत्रून्बाह्यांस्ततो जयेत् ।

तेषां क्रोधादीनाम् ।

बाह्यास्तु त्रिविधा ज्ञेयास्तुल्याभ्यन्तरकृत्रिमाः ॥ ४१७ ॥

षडङ्गरक्षा कर्तव्या तथानेन प्रयत्नतः ।

अङ्गान्युक्तानि ।

अङ्गेभ्यो यस्त्वथैकोपि द्रोहमाचरतेल्पधीः ।
वधस्तस्य तु कर्तव्यः शीघ्रमेव महीक्षिता ॥ ४१८ ॥

न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते ।
न भाव्यं दारुणेनापि तीक्ष्णादुद्विजते जनः ॥ ४१९ ॥

काले मृदुर्यो भवति काले भवति दारुणः ।
राजा लोकद्वयापेक्षी तस्य लोकद्वयं भवेत् ॥ ४२० ॥

भृत्यैः सह महीपालः परिहासं च वर्जयेत् ।
भृत्याः परिभवन्तीह नृपं * * * संकथम् ॥ ४२१ ॥

व्यसनानि च सर्वाणि भूपतिः परिवर्जयेत् ।
सप्तदोषा सदा राज्ञा हातव्या व्यसनोदयाः ॥ ४२२ ॥

प्रायशोर्थे विनश्यन्ति धृतमूला अपीश्वराः ॥ ४२३ ॥

तानि च व्यसनानि—

स्त्रियोक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
तथैव दण्डपारुष्यमर्थदूषणमेव च ॥ ४२४ ॥

कामं क्रोधं च वर्जयेदित्युक्तं तत्र मूलमाह—

मृगयाक्षा दिवास्वापः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथात्यागः कामजो दशको गणः ॥ ४२५ ॥

पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणे ।
वाग्दण्डजं च पारुष्यं क्रोधजोपि गणोऽष्टकः ॥ ४२६ ॥

दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥ ४२७ ॥

पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ ४२८ ॥

व्यसनानि वर्जयेदस्यापवादमाह –

लोकसंग्रहणार्थाय कृतकव्यसनी भवेत् ।
शौण्डीरस्य नृपेन्द्रस्य नित्यमुत्सिक्तचेतसः ॥ ४२९ ॥

जनो विरागमायाति सदा दुःसेव्यभावतः ।
तस्मात्पूर्वाभिभाषी स्यात्सर्वस्यापि महीपतिः ॥ ४३० ॥

अदीर्घसूत्रश्च भवेत्सर्वकर्मसु पार्थिवः ।
दीर्घसूत्रस्य नृपतेः कर्महानिर्भवेद्ध्रुवा ॥ ४३१ ॥

अस्यापवादमाह—

रागे दर्पे च माने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्तव्ये दीर्घसूत्रः प्रशस्यते ॥ ४३२ ॥

पौरुषं दैवसंपत्त्या काले फलति पार्थिवे ॥ ४३३ ॥

दैवं पुरुषकारश्च कालश्च मनुजोत्तम ।
त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलप्रदम् ॥ ४३४ ॥

कृषिवृष्टिसमायोगाद् दृश्यन्ते फलसिद्धयः ।
ताश्च काले प्रदृश्यन्ते नैवाकाले कथंचन ।
तस्मात्सदैव कर्तव्यं सधर्मं पौरुषं नृभिः ॥ ४३५ ॥

साम भेदस्तथा दानं दण्डश्च मनुजोत्तम ।
उपेक्षा च तथा माया इन्द्रजालं च पार्थिव ॥ ४३६ ॥

द्विविधं कथितं साम तथ्यं चातथ्यमेव च ।
तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते ।
तत्र साधुः प्रयत्नेन सामसाध्यो नरोत्तम ॥ ४३७ ॥

ये शुद्धवंशा ऋजवः प्रतीता धर्मे स्थिता धर्मरता विनीताः ।
ते सामसाध्याः पुरुषाः प्रदिष्टा अनुव्रता ये सततं च राजन् ॥४३८॥

अथ भेदः—

परस्परं ये (वि)द्विष्टाः क्रुद्धा भीता विमानिताः ।
तेषां भेदं प्रयुञ्जीत भेदसाध्या हि ते मताः ॥ ४३९ ॥

अन्तःकोपो बाहिःकोपो यत्र स्यातां महीक्षिताम् ।
अन्तःकोपो महांस्तत्र नाशकः पृथिवीक्षिताम् ॥ ४४० ॥

सामन्तकोपो बाह्यस्थकोपः प्रोक्तो मनीषिभिः ।
महिषीयुवराजाभ्यां तथा सेनापतेर्द्विज ॥ ४४१ ॥

अमात्यमन्त्रिणां चैव राजपुत्रे तथैव च ।
अन्तःकोपो विनिर्दिष्टो दारुणः पृथिवीक्षिताम् ॥ ४४२ ॥

इति भेदः । अथ दानम्—

सर्वेषामप्युपायानां दानं श्रेष्ठतमं महत् ।
सुदत्तेन समायाति दानेनोभयलोकजित् ॥ ४४३ ॥

न केवलं दानपरा जयन्ति भूर्लोकमेकं पुरुषप्रवीराः ।
जयन्ति ते राजसुरेन्द्रलोकं सुदुर्जनं(यं) यद्धनुषा तथैव ॥ ४४४ ॥

इति दानस्वरूपकथनम् । दण्डस्वरूपं निरूप्यते—

न शक्या ये वशीकर्तुमुपायत्रितयेन तु ।
दण्डेन तान्वशीकुर्याद्दण्डो हि वशकृन्नृणाम् ॥ ४४५ ॥

आश्रमी यदि वा वर्णी पूज्यो वाथ गुणि(रु)र्महान् ।
नादण्ड्यो नाम राज्ञोस्ति स्वधर्मे वावतिष्ठति ॥ ४४६ ॥

एवं सांसिद्धिकं लोके सर्वं दण्डे प्रतिष्ठितम् ।
अन्धे तमसि मज्जेत यदि दण्डं न पातयेत् ॥ ४४७ ॥

यस्माद्दण्ड्यं दण्डयति दुर्मदान्दमयत्यपि ।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥ ४४८ ॥

तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ।
धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ॥ ४४९ ॥

स नेतुं न्यायतः शक्योऽलुब्धेन कृतबुद्धिना ।
सत्यसंधेन शुचिना ससहायेन धीमता ॥ ४५० ॥

यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानुषम् ।
जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत् ॥ ४५१ ॥

अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम् ।
सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥ ४५२ ॥

साहसस्तेयपारुष्यगोभिशापात्ययं स्त्रियाम् ।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ ४५३ ॥

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेव(ति) च ॥ ४५४ ॥

परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥ ४५५ ॥

स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ॥
अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तितः ॥ ४५६ ॥

दण्डादेतत्प्रभवति याति तद्व्यसने क्षयम् ।
अरयोपि हि मित्रत्वं यान्ति दण्डवतो ध्रुवम् ॥ ४५७ ॥

दण्डप्रायो हि नृपतिर्भुक्त्वा चाक्रम्य मेदिनीम् ।
संस्तम्भयति मित्राणि अमित्रान्नाशयत्यपि ॥ ४५८ ॥

कामन्दकः—

अनुबन्धं परीक्ष्यादौ देशकालौ च तत्त्वतः ।
सारापराधावालोक्य दण्डं दण्ड्येषु पातयेत् ॥ ४५९ ॥

आगःस्वपि तथान्येषु ज्ञात्वा जातिं धनं वयः ।
दण्डं प्रकल्पयेद्राजा सामन्तब्राह्मणैः सह ॥ ४६० ॥

दण्डभेदानाह—

धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ।
योज्याः समस्ता व्यस्तास्तु ह्यपराधवशादिमे ॥ ४६१ ॥

वाग्धिग्वधः स्वकं चैव चतुर्धा वर्तितो दमः ।
पुरुषे दोषविभवं ज्ञात्वा संपरिकल्पयेत् ॥ ४६२ ॥

अपराधवशान्नियोजयेदित्युक्तं तत्र कस्मिन्कं नियोजयेदित्याह—

गुरून्पुरोहितान्विप्रान्वाग्दण्डेनैव दण्डयेत् ।
विवादिनो नरांश्चान्यान् दोषिणोऽर्थेन दण्डयेत् ।
महापराधयुक्तांश्च वधदण्डेन दण्डयेत् ॥ ४६३ ॥

किंच—

मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विषु ।
यथोक्तं तस्य तत्कुर्युरनुक्तं साधुकल्पितम् ॥ ४६४ ॥

अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः ।
निरोधनेन बन्धेन विविधेन वधेन च ॥ ४६५ ॥

दण्डस्थानान्याह—

दशस्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत् ।
त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥ ४६६ ॥

तानि दशस्थानान्याह—

उपस्थमुदरं जिव्हा हस्तौ पादौ च पञ्चमम् ।
चक्षुर्नासे च कर्णौ च धनं देहस्तथैव च ॥ ४६७ ॥

मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
पुरुषाणां कुलीमानां नारीणां च विशेषतः ॥ ४६८ ॥

अवध्यान्ब्राह्मणानाहुः सर्वपापेष्ववस्थितान् ।
यदध्य(स्या)कुशलं यस्मान्न तद्राजा समाचरेत् ।
राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् ॥ ४६९ ॥

एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च ।
यशोस्मिन्प्रथते लोके स्वर्गे वासस्तथाक्षयः ॥ ४७० ॥

ब्राह्मणप्रशंसामाह—

इयं वसुंधरा देवी धर्मेण खलु धार्यते ।
ध्रुवं स धार्यते वेदैस्ते धार्यन्ते द्विजातिभिः ॥ ४७१ ॥

अतः सर्वस्य लोकस्य मूलमेते द्विजातयः ।
पालनीयाः प्रयत्नेन पूजनीयाश्च सर्वदा ॥ ४७२ ॥

सुराणां भूसुराणां च सुरभीणां च पालनम् ।
युगे युगे च ये धर्मास्तेषु धर्मेषु ये द्विजाः ॥ ४७३ ॥

आक्रम्य ब्राह्मणैर्युक्तैः परिक्षीणैश्च बान्धवैः ।
भोभिश्च नृपशार्दूल राजसूयाद्विशिष्यते ॥ ४७४ ॥

अभिषिक्तस्य राज्ञः दण्डधारणप्रकारमाह—

अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चोरभक्तप्रियो हि सः ॥ ४७५ ॥

यो योनर्णो महीयेत यश्चैवैकमनुव्रजेत् ।
तं तं दृष्ट्वा स्वतो मार्गात्प्रच्युतं स्थापयेत्पथि ॥ ४७६ ॥

अशास्त्रोक्तेषु चान्येषु पापयुक्तेषु कर्मसु ।
प्रसमीक्ष्यात्मना राजा दण्डं दण्ड्येषु पातयेत् ॥ ४७७ ॥

कुलानि जातिश्रेणीश्च गणान्जानपदानपि ।
स्वधर्माच्चलितान्राज्यान्विनये स्थापयेत्पथि ॥ ४७८ ॥

पिताचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोस्ति धर्माद्विचलितः स्वकात् ॥ ४७९ ॥

दण्ड्यदण्डनप्रशंसामाह—

यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।
इष्टं स्यायज्वभिस्तेन समाप्तवरदक्षिणैः ॥ ४८० ॥

अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति ॥ ४८१ ॥

प्रकारान्तरेण दण्डस्य द्वैविध्यमाह—

शारीरश्चार्थदण्डश्च दण्डः स्याद्द्विविधः स्मृतः ।
शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ।
काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ॥ ४८२ ॥

अराजके हि लोकस्मिन्सर्वतो विद्रुते भयम् ।
रक्षार्थमस्य सिन्धुस्य राजानमसृजत्प्रभुः ॥ ४८३ ॥

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ ४८४ ॥

यस्मादेषां सुरेन्द्राणां मात्राभिर्निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ ४८५ ॥

दण्डप्रणयनार्थाय राजा सृष्टः स्वयंभुवा ।
देवभागानुपादाय सर्वभूतानुगुप्तये ॥ ४८६ ॥

तेजसा यदमुं कश्चिन्नैव शक्नोति वीक्षितुम् ।
तदा भवति लोकेस्मिन्राजा भास्करवत्प्रभुः ॥ ४८७ ॥

यदास्य दर्शनाल्लोकः प्रसादमुपगच्छति ।
नयनानन्दकारित्वात्तदा भवति चन्द्रमाः ॥ ४८८ ॥

यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा राज्ञा विधातव्याः प्रजास्तद्धि यमव्रतम् ॥ ४८९ ॥

वरुणेन यथा पाशैर्बद्ध एव प्रदृश्यते ।
तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ॥ ४९० ॥

यथा सर्वाणि भूतानि धरा धारयते स्वयम् ।
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥ ४९१ ॥

इन्द्रस्यार्कस्य वातस्य यमस्य वरुणस्य च ।
चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत् ॥ ४९२ ॥

वार्षिकांश्चतुरो मासान् यथेन्द्रोप्यभिवर्षति ।
तथाभिवर्षन्स्वं राज्यं कामामिन्द्रव्रतं स्मृतम् ॥ ४९३ ॥

अष्टौ मासान्यथादित्यस्तोयं हरति रश्मिभिः ।
तथा हरेत्करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥ ४९४ ॥

प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥ ४९५ ॥

ज्ञात्वापराधं पुरुषं च लोके विचार्य सभ्यैर्विबुधैः (?) समग्रम् ।
दण्डन्येषु दण्डं परिकल्पयेत पापस्य यच्छमनं प्रकुर्यात् ॥ ४९६ ॥

दृषा(ष्या)नुपांशुदण्डेन हन्याद्राजाविलम्बितम् ।
अदृष्टघातं कुर्वीरन्ये पापा राजवल्लभाः ॥ ४९७ ॥

यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोशे जनपदे दण्डे न स राज्येवतिष्ठते ॥ ४९८ ॥

यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धमार्थयोग्यानि स राज्यमधिगच्छति ॥ ४९९ ॥

न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ ५०० ॥

वनस्पतेरपक्वानि फलान्यवचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं तस्य विनश्यति ॥ ५०१ ॥

यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ ५०२ ॥

यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ ५०३ ॥

पुष्पं पुष्पं विचिन्वन्ति मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाङ्गारकारकः ॥ ५०४ ॥

उत्खातान्प्रतिरोपयन्कुसुमितांश्चिन्वँल्लघून्वर्धयन्
प्रोत्तुङ्गान्नमयन्नतान्समुदयन्विश्लेषयन्संहतान् ।
क्षुद्रान्कण्टकिनो बहिर्विनिमयन्म्लानान्मुहुः सिञ्चयन्
मालाकार इव प्रयोगनिपुणो राजा चिरं नन्दतु ॥ ५०५ ॥

अपक्वः पक्वसंकाशो न च सीदेत कस्यचित् ।
सुपुष्पितः स्यादफलः फलितः स्याद्दुरारुहः ॥ ५०६ ॥

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥ ५०७ ॥

यस्माद्भ्रश्यन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ ५०८ ॥

पितृपैतामहं राज्यं प्राप्तं वा स्वेन तेजसा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनयस्थितः ॥ ५०९ ॥

धर्ममाचरतो राज्ञः सद्भिश्चरितमानसः ।
वसुधा वसुसंपूर्णा वर्तते भूतिवर्धिनी ॥ ५१० ॥

अथ संत्यजतो धर्ममधर्ममनुतिष्ठतः ।
प्रतिसंवेष्टते भूमिरग्नौ चर्ममिवाहितम् ॥ ५११ ॥

अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ ५१२ ॥

धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ५१३ ॥

वाक्सायका वदनान्निःपतन्ति यैराहतः शोचति रात्र्यहानि ।
परस्परो मर्मसु ते पतन्ति तान्पण्डितो नावसृजेषु * * * ॥ ५१४ ॥

यथा यथा हि पुरुषः कल्याणे कुरुते म तिः ।
तथा तथास्य सर्वार्थाः शिध्यन्ते नात्र संशयः ॥ ५१५ ॥

श्रीर्मङ्गलात्संभवति प्रागल्भ्यात्संप्रवर्धते ।
दाक्ष्यात्तु कुरुते मूलं संयमात्प्रातितिष्ठति ॥ ५१६ ॥

संभाव्यं गोषु संपन्नं संभाव्यं ब्राह्मणे त ।
संभाव्यं स्त्रिषु चापल्यं संभाव्यं ज्ञातितो भयम् ॥ ५१७ ॥

ब्राह्मणेषु च येधीराः स्त्रिषु ज्ञातिषु गोषु च ।
वृक्षादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ ५१८ ॥

धूमायन्ते व्यपेतानि ज्वलन्ते संहतानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ५१९ ॥

यस्मिन्यथा वर्तत यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया बाधितव्यः साध्वाचारः साधुना प्रत्युपेयः॥५२०॥

द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं नृणाम् ।
तस्माद्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ ५२१ ॥

वाक्यं तु यो नाद्रियतेनुशिष्टः प्रत्याह यश्चापि नियुज्यमानः ।
प्रज्ञाभिमानी प्रतिकूलवादी त्याज्यः स ता दुर्धर एष भृत्यः ॥ ५२२ ॥

बलं पञ्चविधं लोके पुरुषाणां निबोध मे ।
यत्र बाहुबलं नाम कनिष्ठं बलमुच्यते ॥ ५२३ ॥

अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।
तृतीयं धनलाभं तु बलमाहुर्मनीषिभिः( णः ) ॥ ५२४ ॥

यत्त्वस्य सहजं राजन्पितृपैतामहं बलम् ।
अभिजातबलं नाम तच्चतुर्थं बलं स्मृतम् ॥ ५२५ ॥

येन त्वेतानि सर्वाणि संगृहीतानि भारत ।
यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ॥ ५२६ ॥

अमोघह ** र्यस्य त्वर्य(यं) कृत्यानुवेक्षिणः ।
आत्मप्रत्ययकोशस्य वसुदैव वसुंधरा ॥ ५२७ ॥

अतिसंक्षीणकोशोपि लभते परिवारणम् ।
धृतिः शमो दमः शौचं कारणं वारनिष्ठुराः (?) ॥ ५२८ ॥

मित्राणां चानभिद्रोहः संतताः समिधः श्रियः ।
असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः ॥ ५२९ ॥

तादृङ्नराधिपो लोके वर्जनीयो जनाधिप ।
न शत्रुरङ्कमा(साद्य) मोक्तव्यो वध्यतां गतः ॥ ५३० ॥

आहताद्धि भयं तस्मात्संभवत्यचिरादिह ।
यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता ॥ ५३१ ॥

मज्जन्ति तेवशा राजन् नद्यामश्मप्लवा इव ।
न वृत्तिर्बहुमन्तव्या या वृत्तिः क्षयमावहेत् ॥ ५३२ ॥

क्षयोपि बहुमन्तव्यो यः क्षयो वृद्धिमावहेत् ।
न स क्षयो महाराज यः क्षयो वृद्धिमावहेत् ॥ ५३३ ॥

क्षयः स इह मन्तव्यो यं लब्ध्वा बुद्धिमावहेत् ।
समृद्धा गुणतः केचित् भवन्ति धनिनोपरे ॥ ५३४ ॥

धनवृद्धान्गुणैर्हीनान् धृतराष्ट्र विवर्जय ।
ज्ञायेत वर्धनीयास्तैर्य इच्छन्त्यात्मनः परम् ॥ ५३५ ॥

कुलवृद्धिं च राजेन्द्र तस्मात्साधु समाचर ।
सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥ ५३६ ॥

संबोधनं संकथनं संप्रीतिश्च परस्परम् ।
ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च ॥ ५३७ ॥

मन्त्रभेदस्य षट् प्राज्ञो ज्ञाता(द्वारा)ण्येतानि रक्षयेत् ।
अर्थसंततिकामश्च रक्षेदेतानि नित्यशः ॥ ५३८ ॥

मदः स्वप्नमविज्ञानमाकारं चात्मसंशयम् ।
दुष्टामात्येषु विश्रम्भं दूताचाकुशलादपि ॥ ५३९ ॥

द्वाराण्येतानि यो ज्ञात्वा संवृणोति सदा नृपः ।
त्रिवर्गचरणे युक्तः स शत्रूनधितिष्ठति ॥ ५४० ॥

न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य च ।
धर्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि ॥ ५४१ ॥

राजोपसेवितं वंयं धार्मिकं प्रियदर्शनम् ।
मित्रवन्तं स्ववाक्यं च सुहृदं परिपालयेत् ॥ ५४२ ॥

दुःकुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् ।
धर्मापेक्षी मृदुर्ह्रीमान् स कुलीनः शताद्वरः ॥ ५४३ ॥

आपदां प्रतिकारज्ञो तदात्वे दृढनिश्चयः ।
अतीते कार्यशेषज्ञो नरोऽर्थैर्न प्रहीयते ॥ ५४४ ॥

कामं तदुपसेवेत न मूढव्रतमाचरेत् ।
दुःखार्तेष्वप्रशान्तेषु नास्तिकेष्वलसेषु च ॥ ५४५ ॥

न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ।
अत्यार्यमतिदातारमतिशूरमतिप्रियम् ॥ ५४६ ॥

प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ।
न चातिगुणवत्स्वेषा नात्यन्तं निर्गुणेषु च ॥ ५४७ ॥

उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते ॥ ५४८ ॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम् ॥ ५४९ ॥

अतिक्लेशेन येर्थाः स्युर्धर्मस्यातिक्रमेण च ।
अरेर्वा प्रणिपातेन मास्मातवु(स्म तेषु) मनः क(कु)थाः ॥ ५५० ॥

अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राज्यमराजकम् ॥ ५५१ ॥

यस्य दानजितं मित्रं शत्रवो बुद्धिनिर्जिताः ।
अन्नपानजिता दाराः सफलं तस्य जीवितम् ॥ ५५२ ॥

आशा धृतिं हन्ति समृद्धिमन्तः क्रोधः श्रियं हन्ति कदर्यताम् * ।
अपालनं हन्ति * * * भूप एकः क्रुद्धो ब्राम्हणो हन्ति राष्ट्रम् ॥५५३॥

अधीत्य वेदान्परिसंस्तर्य चाग्नीनिष्ट्वा यज्ञैः पालयित्वा प्रजाश्च ।
गोब्राम्हणार्थे शस्त्रपूतान्नरात्मा हतः संग्रामे क्षत्रियः स्वर्गमेति॥५५४॥

प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता ।
कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः ॥ ५५५ ॥

कामन्दकः—

सकामासक्तमनसां कान्तामुखविलोकनं ।
गलन्ति गलिताश्रूणां यौवनेन सह श्रियः ॥ ५५६ ॥

ग्रीष्ममूर्धांशुसंतप्तं उद्वेजनमनाश्रयम् ।
मरुस्थलमिवोदग्रं त्यजेद्दुर्जनसंगमम् ॥ ५५७ ॥

ये प्रियाणि प्रभाषन्ते प्रियमिच्छन्ति तत्कृतम् ।
श्रीमन्तोवद्यचरिता देवास्ते नरविग्रहाः ॥ ५५८ ॥

याने शय्यासने भोज्ये पाने शस्त्रे विभूषणे ।
सर्वत्रैवाप्रमत्तः स्याद्बुद्धे न विषदूषणम् ॥ ५५९ ॥

संधिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षाड्गुण्यं चिन्तयेत्सदा ॥ ५६० ॥

पौरा जानपदान्सर्वाः शत्रुग्रहणसमयः ।
दीर्घाध्वानि परिश्रान्तं क्षुत्पिपासाहितश्रमम् ॥ ५६१ ॥

व्याधिदुर्भिक्षमरकपीडितं तद्वदेव हि ।
घोराग्निभयवित्रस्तं वृष्टिवातसमाहतम् ॥ ५६२ ॥

पङ्कपांसुजलस्कन्नव्यस्तं श्वासाकुलाकुलम् ।
प्रसुप्तं भोजने व्यग्रमभूमिष्ठ्वसनं स्थितम् ॥ ५६३ ॥

एवमादिषु जातेषु व्यसनेषु समाकुलम् ।
स्वसैन्यं साधु रक्षेत परसैन्यं च घातयेत् ।
विशिष्टो देशकालाभ्यां युक्तः प्रकृतिभिर्बलैः ॥ ५६४ ॥

निशि विश्रम्भसंयुक्तं तत्सौप्तिकादिभावत् ।
इत्येवं कूटयुद्धेन हन्याच्छत्रूनुपस्थितः ॥ ५६५ ॥

उपरुन्धन्ति राजानो भूतानि विविधानि च ।
त एव विनयं प्राप्य वर्धयन्ति पुनः प्रजाः ॥ ५६६ ॥

ता लुण्ठेत्पीडयेच्च शत्रोः प्रकृतयः स्वयम् ।
वशे जाते पुनस्तासु पितृवद्वृत्तिमाचरेत् ॥ ५६७ ॥

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च युद्धे चाभिमुखो गतः ॥ ५६८ ॥

आहवेषु मिथोन्योन्यं जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ ५६९ ॥

द्वैपायनेन मुनिना मनुना च धर्मा
युद्धेषु ये निगदितास्तु नगः ( ? ) ।
स्वर्भ्य(र्भ्व)र्थगाद्विजहितं त्यजतां शरीरं
लोका भवन्तु विपुलाः सुलभं यशश्च ॥ ५७० ॥

स्वर्गस्य मार्गा बहवः प्रदिष्टास्ते कृच्छ्रसाध्याः कुटिलाः सविघ्नाः ।
निमेषमात्रेण महाफलोयमृजुश्च पन्थाः समरं व्यसुत्वम् ॥ ५७१ ॥

द्विजा अपि न गच्छन्ति यां गतिं नैव योगिनः ।
स्वाम्यर्थे संत्यजन्प्राणांस्तां गतिं याति सेवकः ॥ ५७२ ॥

एतत्तपश्च पुण्यं च धर्मश्चैव सनातनः ।
चत्वारश्चाश्रमास्तस्य यो युद्धे न पलायते ॥ ५७३ ॥

यदि समरमपास्य नास्ति जन्तो-
र्भयमिति युक्तमतोन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम् ॥ ५७४ ॥

वृद्धो बालो न हन्तव्यो नैव स्त्री नैव वा द्विजः ।
तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत् ॥ ५७५ ॥

ब्राह्मणार्थे समुत्पन्ने * भिनिसृज्य युध्यति ।
आत्मानं यूपमुत्सृज्य स यज्ञोनन्तदक्षिणः ॥ ५७६ ॥

यस्य पार्वति शस्त्राणि तनुं भिन्दन्ति संयुगे ।
तावतः सोश्नुते लोकान् सर्वान्कामदुघोक्षयान् ॥ ५७७ ॥

यदस्य रुधिरं गात्रादाहवेषु प्रवर्तते ।
सह तेनैव रक्तेन सर्वपापैः प्रमुच्यते ॥ ५७८ ॥

त्यागेन यः सहायानां स्वप्राणांस्त्रातुमिच्छति ।
संहन्युः काष्ठलोष्ठैर्वा दहेयुर्वा कटाग्निना ॥ ५७९ ॥

अजामिव प्रजां हन्याद्यो मोहात्पृथिवीपतिः ।
तस्यैव जायते तृप्तिर्द्वितीयस्य कथंचन ॥ ५८० ॥

प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।
राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥ ५८१ ॥

भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम् ।
नास्त्येकमपि यद्येषां तन्न कुर्यात्कथंचन ॥ ५८२ ॥

शपथैः संधितस्यापि न विश्वासं व्रजेद्रिपोः ।
राज्यलोको(भो)द्धतो वृत्रः शक्रेण शपथैर्हतः ॥ ५८३ ॥

कौर्मं संस्थानमास्थाय प्रहारानपि मर्षयेत् ।
काले काले च मतिमान् उत्तिष्ठेत्कृष्णसर्पवत् ॥ ५८४ ॥

तावद्भयाद्धि भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ ५८५ ॥

स्वगात्राण्यपि भाराय भवन्ति हि विपर्यये ।
मा त्वं तात बले स्थित्वा बाधेथा दुर्जनं जनम् ॥ ५८६ ॥

न हि दुर्बलदग्धानां बाल किंचित्प्ररोहति ॥ ५८७ ॥

यानि मिथ्याभिभूतानां पतन्त्यश्रूणि रोदताम् ।
तानि संतापकान्घ्नन्ति सपुत्रपशुबान्धवान् ॥ ५८८ ॥

बुद्धौ कलुषभूतायां विकारे प्रत्युपस्थिते ।
अनयो नयसंकाशो हृदयान्नोपसर्पति ॥ ५८९ ॥

न कालः खड्गमादाय शिरः कस्यापि कृन्तति ।
कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥ ५९० ॥

न तु हन्यान्महीपालो दूतं कस्यांचिदापदि ।
दूतं हत्वा तु नरकं प्रविशेन्मन्त्रिभिः सह ॥ ५९१ ॥

नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विरोधे वर्तमाने समाने
तदुभयहितकर्ता त्यज्यते पार्थिवेन्द्रः ॥ ५९२ ॥

न कश्चिच्चण्डकोकानामात्मीयो नाम भूभुजाम् ।
होतारमभिजित्स्वन्ते दहत्येव हि पावकः ॥ ५९३ ॥

गृध्राकारोप(पि)सेव्यः स्याद्धंसाकारैः सभासदैः ।
हंसाकारोपि संत्याज्यो गृध्राकारैः सभासदैः ५९४ ॥

आसन्नमेव भजते नृपतिर्मनुष्यं विद्याविहीनमकुलीनमपण्डितं च ।
प्रायेण भूमिपतयो – – – – पार्श्वयोर्भवति तं परिवेष्टयन्ति ॥५९५॥

यस्मिन्सुधाधिकं चक्षुरारोपयति पार्थिवः ।
कुलीनो वाकुलीनो वा स श्रियो भाजनं भवेत् ॥ ५९६ ॥

धवलान्यातपत्राणि वाजिनश्च मनोरमाः ।
सदामत्ताश्च मातङ्गाः प्रसन्ने सति भूपतौ ॥ ५९७ ॥

आयाच्चतुर्थभागेन व्ययकर्म प्रवर्तयेत् ।
प्रभूततैलदीपोपि चिरं भद्राणि पश्यति ॥ ५९८ ॥

अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डि[illegible] सुलभं पुरुषे क्वचित् ॥ ५९९ ॥

हन्तुमेवो(षो)पसर्पन्ति मृगेन्द्रः संकुचत्यपि ।
बुद्धिमन्तः सहन्त्येव निधाय हृदि किंचन ॥ ६०० ॥

क्रतौ निवाहे व्यसने रिपुस्करे यशस्करे कर्मणि मित्रसंग्रहे ।
प्रियासु नारीष्वधनेषु बन्धुषु धनव्ययस्त्वेषु न गण्यते बुधैः ॥६०१॥

कोहं कौ देशकालौ समविषमगुणाः (केरयः के सहायाः
का शक्तिः कोभ्युप[illegible]: फलमिह च कियत् कीदृशी) दैवसंपत् ।

संपत्तौ को निबन्धः प्रविदितवचनस्यांतरं किं नु मे स्या-
दित्येवं कार्यसिद्धावव्वाहितमनसः संपदो हस्तसंस्था: ॥६०२॥

परान्नं परवस्त्रं च परशय्यासनं स्त्रियम् ।
परवेश्मनिवासं च दूरतः परिवर्जयेत् ॥ ६०३ ॥

धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥ ६०४ ॥

मूर्खस्तु परिहर्तव्यः प्रत्यक्षो द्विपदः पशुः ।
विध्यते वाक्यशल्येन अदृष्टः कण्टको यथा ॥ ६०५ ॥

कणशेषं शत्रुशेषमग्निशेषं तथैव च ।
पुनः पुनः प्रवर्धन्ते तस्माच्छेषं न धारयेत् ॥ ६०६ ॥

अशक्यं नारभेद्विद्वान्नैवाकार्यं च कारयेत् ।
अफलं नैव सेवेत तथासत्यं च( न ) जल्पयेत् ॥ ६०७ ॥

भजन्तं भजते प्राज्ञो नाभजन्तं कथंचन ।
प्रत्यक्षं दृश्यते लोके हस्तं हस्तेन क्षालयेत् ॥ ६०८ ॥

रिपुराजाग्निसर्पेषु विषे चाग्निषु शृङ्गिषु ।
शस्त्रपाणिषु मूर्खेषु विश्वासो न कदाचन ॥ ६०९ ॥

न क्लेशविरहे द्रव्यं द्रव्यहीने कुतः क्रिया ।
क्रियाहीने कुतो धर्मो धर्महीने कुतः सुखम् ॥ ६१० ॥

जीवितं मृतकं मन्ये देहिनां धर्मवर्जितम् ।
मृतो धर्मेण संयुक्तो दीर्घजीवी भविष्यति ॥ ६११ ॥

स धर्मो यत्र नाधर्मस्तत्सुखं यत्र नासुखम् ।
तज्ज्ञानं यत्र नाज्ञानं सा गतिर्यत्र नागतिः ॥ ६१२ ॥

सत्यं शौचं दया दानं परद्रव्यं न गृह्यते ।
ब्रह्मचर्यं तपोमूलमेतद्धर्मस्य लक्षणम् ॥ ६१३ ॥

क्षीयन्ते सर्वदानानि राज्ञां होमे बलिक्रिया ।
न क्षीयते महादानमभयं सर्वदेहिनाम् ॥ ६१४ ॥

राज्यं च संपदो भोगाः कुले जन्म सुदृष्टता ।
पाण्डित्यमायुरारोग्यं धर्मस्यैतत्फलं विदुः ॥ ६१५ ॥

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥ ६१६ ॥

उत्तमैः सह संयोगं पण्डितैः सह संकथाः ।
अलुब्धैः सह मित्रत्वं कुर्वाणो नावसीदति ॥ ६१७ ॥

अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
नीचवाक्यं चापमानं मतिमान्न प्रकाशयेत् ॥ ६१८ ॥

पण्डिताश्च विनीताश्च धर्मज्ञाः सत्यवादिनः ।
बन्धनस्थापि तिष्ठेयुर्न तु राज्यं खलैः सह ॥ ६१९ ॥

अर्थेनापि हि किं तेन अन्यायोपार्जितेन च ।
न तेन गम्यते स्वर्गे दत्तेन बहुनापि वा ॥ ६२० ॥

अतिलौल्यप्रसक्तानां विपत्तिर्नैव दूरतः ।
गलिका इव लुब्धानां मीनानां तु यथाम्भसि ॥ ६२१ ॥

स्त्रीषु राजसु सर्पेषु स्वाध्याये शत्रुविग्रहे ।
भार्यादिष्वपि विश्वासो न कर्तव्यः कथंचन ॥ ६२२ ॥

न जातु गच्छेद्विश्वासं संधितोपि हि बुद्धिमान् ।
अद्रोहसमयं कृत्वा वृत्रमिन्द्रः पुरावधीत् ॥ ६२३ ॥

बलीयसापि संधाय तं प्रविश्य प्रतापवान् ।
तथा साध्वनुगन्तव्यो यथा विश्रम्भमाप्नुयात् ॥ ६२४ ॥

नैकस्तु मन्त्रयेन्मन्त्रं न राजाबुद्धिभिः सह ।
नारोहेद्विषमां नावमपरीक्षितनाविकाम् ॥ ६२५ ॥

ये चास्य भूमिं जयिनो भवेयुः परिपन्थिनः ।
तानानयेद्वशं सर्वान्सामादिभिरुपक्रमैः ॥ ६२६ ॥

यथा न स्यात्कृशीभावः प्रजानामनवेक्षया ।
तथा राज्ञा वर्तितव्यं स्वराज्यं परिरक्षति(ता) ॥ ६२७ ॥

मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥ ६२८ ॥

यो राष्ट्रमनुगृह्णाति स राज्यं परिरक्षति ॥ ६२९ ॥

ग्रामस्याधिपतिं कुर्याद्दशग्रामाधिपं तथा ।
विंशतीशं शतेशं च सहस्रपतिमेव च ॥ ६३० ॥

इति श्रीमद्भूभृद्बलान्वयमुकुटालंकारश्रीमच्छाहराजसुतश्रीमच्छिवच्छत्रपतिसुतश्रीमच्छम्भुराजविरचिते बुधभूषणे राजनीतिः ॥

# तृतीयोऽध्यायः

## प्रकीर्णनीतिः

उक्त्वा भूरिविभेदां बुधसंतुष्ट्यै राजनीतिमनवद्याम् ।
संप्रति मिश्रकनीतिर्विबुधविमोदाय तन्यते शिरसा ॥ १ ॥

क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते च कामान् ।
नासंस्पृष्टो ह्युपयुङ्क्ते परेषां तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ २ ॥

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छान्ति याचितुम् ।
आपत्सु न विमुह्यन्ति नराः पण्डितबुद्धयः ॥ ३ ॥

प्रवृत्तवाक्चित्रकथा ऊहवान्प्रतिभानवान् ।
आशुग्रन्थार्थवक्ता च यः स पण्डित उच्यते ॥ ४ ॥

स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते ॥ ५ ॥

अमित्रं कुरुते मित्रं (मित्रं) द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ६ ॥

अनाहूतः समभ्येति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ७ ॥

एकः क्षमावतां दोषो द्वितीयो नोपलभ्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ८ ॥

सोस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
अक्षमावान्परं दोषैरात्मानं चापि योजयेत् ॥ ९ ॥

द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके महीयते ।
अब्रुवन्परुषं किंचिदसतो वर्जयंस्तथा ॥ १० ॥

षड् दोषाः पुरुषेणेव हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ११ ॥

अष्टौ पूर्वाणि चिह्नानि नरस्य विनाशिष्यतः ।
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ १२ ॥

ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ १३ ॥

नैतान्स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बध्ये बुद्ध्वा विवर्जयेत् ॥ १४ ॥

नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी ।
न चाभिमानी न च हीनवृत्तो रूक्षां [illegible]मंति वर्जयन्तीम् (?) ॥१५॥

अप्रशस्तानि कार्याणि यो मोहादनुतिष्ठति ।
स तेषां विपरिभ्रंशाद्भ्रश्यते जीवितादपि ॥ १६ ॥

दैवतेषु च यत्नेन राजसु ब्राह्मणेषु च ।
नियन्तव्यः सदा क्रोधी वृद्धबालातुरेषु च ॥ १७ ॥

निरर्थं कलहं प्राज्ञो वर्जयेन्मूढचेतसम् ।
कीर्तिं च लभते लोके न चार्थेन योजयेत् ॥ १८ ॥

विनयेन विना का श्रीः का निशा शशिना विना ॥
रहिता सत्कवित्वेन कीदृशी सा विदग्धता ॥ १९ ॥

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन तु ।
नेत्रवक्त्रविकारैश्च ज्ञायतेन्तर्गतं मनः ॥ २० ॥

सिद्धमन्त्रौषधं धर्मं गृहच्छिद्रं च मैथुनम् ।
कुभुक्तं कुश्रुतं चैव मतिमान्न प्रकाशयेत् ॥ २१ ॥

येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत ।
सदा प्रसादनं तेषां देवतानामिवाचरेत् ॥ २२ ॥

दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव ॥
विवर्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति ॥ २३ ॥

मार्दवं सर्वभूतानामनसूया क्षमा धृतिः ॥ २४ ॥

अवृत्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः ।
हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणम् ॥ २५ ॥

नानीयात्प्रेषणे भृत्यान्बान्धवान्व्यसनागमे ।
मित्रं चापत्तिकाले च भार्यां च विभवक्षये ॥ २६ ॥

स्वामिनि गुणान्तरज्ञे गुणमपि भृत्येनुवर्तिनि कलत्रे च ।
मित्रे चानुपवर्ते निवेय – – सुखी भवति ॥ २७ ॥

उत्पाद्य पुत्राननृणांश्च कृत्वा वृत्तिं च तेभ्योनुविधाय कांचित् ।
स्थाने कुमारीः प्रतिपाद्य सर्वा अरण्यसंस्थोथ मुनिर्बुभूषे ॥ २८ ॥

उत्थानं संयमो दाक्ष्यमप्रमादो धृतिः स्मृतिः ।
समीक्ष्य च समारम्भो वृद्धिमूलं भविष्यति ॥ २९ ॥

अतिक्लेशेन येर्थाः स्युर्धर्मस्यातिक्रमेण च ।
अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः ॥ ३० ॥

त्यागेन हीनस्य कुतोस्ति लक्ष्मीर्ध्यानेन हीनस्य कुतोस्ति सिद्धिः
अशुद्धं ॥ ३१ ॥

आर्तो वा यदि वा त्रस्तः परेषां यदि वागतः ।
अपि प्राणान्परित्यज्य रक्षितव्यः कृतात्मना ॥ ३२ ॥

देहे पातिनि का रक्षा यशो रक्ष्यमपातयन् ।
नरः पतितकायोपि यशःकायेन जीवति ॥ ३३ ॥

सुलभाः पुरुषा लोके सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य श्रोता वक्ता च दुर्लभः ॥ ३४ ॥

दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते ।
पुंसां हि यदि सा लक्ष्मीरलक्ष्मीः कतमा भवेत् ॥ ३५ ॥

प्रियः प्रजानां दातैव न पुनर्द्रविणेश्वरः ।
आगच्छन्काङ्क्ष्यते लोकैर्वारिदो न तु वारिधिः ॥ ३६ ॥

याचितो * प्रहृष्येत दत्वा च प्रियवाग्भवेत् ।
तं दृष्ट्वाप्यथवा स्पृष्ट्वा नरः स्वर्गतिमाप्नुयात् ॥ ३७ ॥

पुत्रो वशी स्वार्थकरी च विद्या अरोगिता मित्रसमागमश्च ।
भार्या विनीता प्रियवादिनीच शोकस्य मूलोद्धरणानि पञ्च ॥ ३८ ॥

अविनीतो भृत्यजनो नृपतिरदाता * * नि मित्राणि ।
अविनयवती च भार्या मस्तकशूलानि चत्वारि ॥ ३९ ॥

कान्तावियोगः स्वजनापमानो ऋणस्य शेषः कुजनस्य सेवा ।
दारिद्र्यदावाभिमुखं तु मित्रं विनाग्निना पञ्च दहन्ति गात्रम् ॥ ४० ॥

द्यूतं च मांसं च सुरा च वेश्या पापर्द्धिचौर्यं परदारसेवा ।
एतानि सप्त व्यसनानि सप्त नरं सुघोरं नरकं नयन्ति ॥ ४१ ॥

वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुणे नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले ।
एते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ ४२ ॥

कलासु यत्नः पुरुषेण कार्यो न किंचिदप्राप्यतमं कलानाम् ।
कलाप्रकर्षादुडुपेन शम्भोरनर्घ्यमासादितमुत्तमाङ्गम् ॥ ४३ ॥

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालनात्
विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।
मैत्री चाप्रणयात्समृद्धिरनयात्स्नेहः प्रवासाश्रयात्
स्त्री गर्भादनवेक्षणादपि कृषिस्त्यागावमानाद्धनम् ॥ ४४ ॥

उचितमनुचितं वा कुर्वता कार्यजातम्
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाहे शल्यतुल्यो विपाकः ॥ ४५ ॥

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरतिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ४६ ॥

यदिच्छसि वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यश्चरन्तीं गां निवारय ॥ ४७ ॥

अविवेकमतिर्नृपतिर्मन्त्री गुणवत्सु वक्रितग्रीवः ॥
यत्र खला(श्च) प्रबलास्तत्र कथं सज्जनावसरः ॥ ४८ ॥

राजा संपत्तिहीनोऽपि सेव्यः सेवागुणान्वितैः ।
भवत्यजीवनं तस्मात्फलं कालान्तरादपि ॥ ४९ ॥

मित्रं स्वस्थतया रिपुं नयबलैर्लुब्धं धनैरीश्वरं
कार्येण द्विजमादरेण युवतिं प्रेम्णातितीर्व(र्थं ?) स्तवैः ।
बन्धुं च क्षमया गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं
विद्याभी रसिकं रसेन सकलं शीलेन कुर्याद्वशम् ॥ ५० ॥

अर्थी लाघवमुच्छ्रितो नियतनं कामातुरो लाञ्छनम्
लुब्धोऽकीर्तिमसङ्गरः परिभवं दुष्टोन्यदोषे रतिम् ।

निःस्वो वञ्चनमुन्मना विकलतां शोकातुरो म्लानताम्
दुर्वागप्रियतां दुरोदरवशः प्राप्नोति कष्टं मुहुः ॥ ५१ ॥

कीर्तिर्भूमिभुजां रतिर्गुणवतां ह्रीरङ्गनानां धृति-
र्दम्पत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो गिराम् ।
विद्वांसः सदसोम्बुजानि सरसां सस्योत्करैर्भूवृता-
मुद्यानं नगरस्य वारि सरितां स्वास्थ्यं ( स्थ्यं ) सतां मण्डनम् ॥५२॥

कार्पण्येन यशः क्रुधा गुणचयो दम्भेन सत्यं क्षमा
लोभेन प्रमदा हठेन जरया रूपं तमो ज्योत्स्नया ।
सेवाभिर्महिमा मदेन विनयः स्नेहः प्रवासैस्तथा
मानोनुव्रजनेन कर्म कपटैर्विद्या धनैर्गच्छति ॥ ५३ ॥

मूर्खः शान्तस्तपस्वी क्षितिपतिरलसो मत्सरी धर्मशीलो
दुःस्थो मानी गृहस्थः प्रभुरतिकृपणः शास्त्रविद्धर्महीनः ।
प्रज्ञाहीनो नरेन्द्रः स च सचिववशो नास्तिकः शास्त्रद्रष्टा
वृद्धो रोगी दरिद्रः स च युवतिपतिर्धिग्विडम्बप्रकारः ॥ ५४ ॥

स्त्रीणां यौवनमर्थिनामनुगमो राज्ञः प्रतापः सताम्
सत्यं स्वल्पधनस्य संततिरसद्वृत्तस्य वाग्डम्बरः ।
आचारस्य सुशीलता नयवतां स्थैर्यं कुलस्यैक्यता
पूजाया धनमुन्नतेर्गुणचते ( रति ? ) शान्तेर्विवेकोच्चयम् (?) ॥५५॥

विद्वान्संसदि पाक्षिकः परमतो मानी गृहस्थो व्ययी
भिक्षुर्भोगपरो यतिर्विसुमना मूर्खश्च पाण्डित्यकृत् ।
निःस्वः कामयतेथ कुप्यति मृषा वृद्धो विवाहोद्यतो
वेदान्ती हतसत्क्रियः किमपरं हास्यास्पदं भूतले ॥ ५६ ॥

को लाभो गुणिसंगमः किमपरं प्राज्ञेतरैः संगतिः
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनम्
विद्या किं सुखमप्रवासगमनं राज्ञः किमाज्ञा फलम् ॥ ५७ ॥

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवं प्रधानमिति कापुरुषा वदन्ति।
दैवं विहाय कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ५८ ॥

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
यवेच्य—

# Notes

[ K. N. = Kāmandakīya Nītisāra; V. D. = Viṣṇudharmottara Purāṇa; M. P. = Matsya Purāṇa; M. B. = Mahābhārata. ]

## CHAPTER II.

| | | |
|---|---|---|
| 4-6 | — | K. N. IV. 14-16. V. L. :—स्वविग्रहः in 4; परच्छिद्रान्ववेक्षी in 5; विनियोक्ता च पात्रवित् in 6. |
| 7a | — | K. N. IV. 17a. |
| 7b | — | K. N. IV. 18a. |
| 7c | — | K. N. IV. 19b. |
| 8 | — | K. N. IV. 20. |
| 9-14 | — | K. N. IV. 4-9. V. L. दुर्धार्य in 9; साध्या or साध्याभिगामिकाः in 13. |
| 15 | — | V. D. II. 3. 1. |
| 16-19a | — | V. D. II. 3. 3-6a. V. L. ऽपि गजेऽश्वे धनुषि in 18. |
| 19b | — | V. D. II. 3. 7a. |
| 20a | — | V. D. II. 3 7b. |
| 32b-34 | — | M. P. 220. 19-20. V. L. धर्मज्ञ in 33a; प्रयत्नतः in 34. |
| 35-39 | — | M. P. 215. 2-6. V. L. II, 24. 2-6. |
| 40 | — | Yājñavalkya I. 312. |
| 41-42 | — | Manu VII. 61-62. |
| 47-59 | — | V. D. II. 6. 1-14. V. L. :— स्थूललक्षो महोत्साहः in 48; यत्कार्यं न वदन्ति महीक्षितः in 49; क्लेशक्षमस्तथा यश्च in 50a; गूढमन्त्रश्च दक्षश्च in 50b; प्रणिधिप्रणयात्मवान् in 52a; वक्ता विधाता in 53a; विग्रहासपदतत्त्ववित् in 56a; यस्तु कार्याणि विविधानि महीपतेः in 58a; तस्याभिरतस्य in 59b; वंशश्च शीघ्रतो in 59d. |
| 63 | — | K. N. XIV. 25. V. L. हि भूपतेः in a. |
| 64 | — | K. N. XIV. 24a, 23b, 21b. V. L. राजराज्याभिरक्षणं in a; अभिन्नप्रतिरक्षणं in b; तद्भक्त्यमना° in c. |

65-67 — Manu VII. 58, 60, 54.

68 — K. N. IV. 24. V. L. अनुरागिण: in a.

72 — K. N. VII. 1. V. L. अतन्द्रिता: in b.

73-78 — M. P. 220. 2-7. V. L. शिक्षयेच्चैनं नाप्तैर्मिथ्या० in 74b; यौवनगाच्चे० in 75b; कर्मणाय महत्स्वपि in 78b. cf. also V.D.II. 65. 3-9a. V. L. स्थैर्य in 74a; च्चवमात्रैर्मिथ्याप्रियंवदैः in 74b; यौवनगं सुखं in 75b; विनयेन कुर्वन in 76a; विशीर्यते in 77b.

79-81 — K. N. VII. 2-4. V. L. मदान्मत्ता: in 79a; भ्रातरं वापि निघ्नन्ति पितरं वाभिमानिनः in 79b; रक्ष्यते राज्यं in 80b; राक्षितारमसंशयं in 81b.

92-94 — K. N. VII. 5-8. V. L. परित्यागं सुदुर्वृत्तोपि नार्हति in 93a.

95-96 — K. N. IV. 42-43. V. L. धारयन्ति ये in 96a, which is surely better than our reading; न तेहि सुहृदः in 96b.

97-98 — K. N. IV. 60-61. V. L. यद्वाराना in 97a; ईप्सित० संपन्ना० in 97b.

103b-105 — K. N. XIV. 33-34. V. L. कोशमूला हि in 103b; कोशव्यसन० in 104a.

109-110 — K. N. VI. 8-10. V. L. शासनाभिरताः सतां in 109a; राज्योप० in 110a; संहता वा तान् हन्यात्० in 110b.

111 — Manu, VII. 74.

112-113 — M. P. 117. 5-6a; V. L. व्याघ्रतस्करवर्जितं in 112a; V. D. II. 26, 5-6a.

114 — Manu, VII. 70; M. P. 117, 6b-7a; V. D. II. 26. 6b-7a.

151-116 — M. P. 217, 7b-9. V. L. विशालं in 116c; V. D. II. 26. 7b-9.

117 — Manu VII. 76.

118 — M. P. 218. 38.

119-150 — M. P. 217. 10-42. V. L. मुक्तिहीनं or युक्ति० in 122a; तद्वसन् or वशात् in 123a; तत्र कर्तव्यं प्रयत्नेन० in 123b; गजेन्द्रमत: in 124b; मन्त्रिधैर्याधिरा in 127b; ours is better; तथाभागं कोष्ठागारं विधीयते in 128a; मर्कटांश्च विशेषतः:

in 130b; तत्र तत्र in 132a; विद्रां शुभान् in 133b; भृशं राजा in 134b; न बहुनामतो दुर्गं विना० in 135b; भूभुजा in 137a; संचयश्चात्र० in 137b; तोमराणां च पार्थिव in 138a. For 139, M. P. reads :—लगुडानां गुडानां च हुडानां परिघैः सह। अश्मनां च प्रभूतानां मुद्गराणां तथैव च। त्रिशूलानां पट्टिशानां कुठाराणां च पार्थिव। प्रासानां च सशूलानां शक्तीनां च नरोत्तम।; कुद्दालरज्जु० and पीटकानां in 140b; तुषाणां चैव दात्राणामङ्गाराणां च संचयः in 141a; our reading gives no sense. इन्धनानां च संचयः in 142b; The order of vv. 144-7 differs in M. P. मृगाश्च पक्षिणः in 148a; पृथिवीक्षिता in 149a; द्रव्याण्यशेषतः in 149b; 150b is a mere repetition of 149a. Also cf. V. D. II. 26. 10-42.

151-154 — M. P. 217. 84-87. V. L. धारणं कार्यं in 151a; पिशाचघ्नाः पापघ्नाः० in 152a; कलाविदश्च पुरुषाः in 152b; भीतान्प्रमत्तान्कुपितान् in 153a; दुर्गसुगुप्त० in 154d; obviously our reading is the correct one.

155 — M. P. 216. 39; V. D. II. 24. 38.

185-186 — K. N. XIX. 2a-3; V. L. मौले भृतं in 186a; बलानां व्यसनं तथा in 186b.

188-190 — M. P. 215. 8-10; V. L. फल्गुसारविशेषवित् in 190a.

194-195 — M. P. 215. 36-37. V. D. स्थविरश्च विशेषतः in 195a.

196 — M. P. 215. 38. V. L. चिकित्सितविशारदः in a; प्रशस्यते in b.

203 — V. D. II. 24. 64b-65a. सदा चरान् in a; जनस्याविदितान् in b; our reading is better. cf. also M. P. 215. 91b-92a.

204-207 — M. P. 215. 90c-91a; 92-94; V. D. II. 24. 63b-64a; 65b-68a.

208-210 — K. N. XIII. 27-29. V. L. जगतां मतं in 208b; विशेषवहं in 209a; हि ते in 209b; चरितैश्चरितैः in 210a.

211 K. N. XIII. 31a, 32. Perhaps कामन्दकोपि is to be read before v. 208.

216 — M. P. 215. 24.

219-220 — M. P. 215. 34-35.

222 — Manu VII. 146.

223 — M. P. 215. 18. V. L. कुलोचित: in a; शूर: क्लेशसहश्चैव in b.

224-225 — M. P. 215. 14-15.

227-228 — K. N. V. 21-22. V. L. भर्तुर्धर्मिने दृष्टिं in 227a. कौत्रेत्य° in 228a.

229-234 — K. N. V. 23-28. V. L. हासं in 229a; चानुरागेण चित्तं चित्तज्ञसंमत: in 230a; तत्परो in 230b; वादि वा वादिनां म 231b.

235 — K. N. V. 58.

236 — M. P. 216. 3. तद्धितं भवेत् in b.

237-239 — M. P. 216. 9, 16, 23.

243 — Manu, VII. 147.

244-247 — Manu, VII. 151-154.

261 — K. N. XII. 47. V. L. निष्कुड्यान्तर° in a; प्रासादाग्रे ह्यरण्ये in b.

262-263 — K. N. XII. 44a, 45b, 46. V. L. आवर्तयेन्मुहुर्मन्त्रं धारयेच्च प्रयत्नत in 262a; आप्तपरंपरा in 262b; भिन्दन्ति मन्त्रं प्रच्छन्ना: in 263b.

264-270 — K. N. XII. 48-54. V. L. कार्यं बुद्धिविवृद्धये in 265b; एकेनापि कार्याणि प्रविचार्य° in 266a; प्रविशेत् in 266b; यद्य-इङ्ग्यात् in 267b; अतिक्रामेत्कदाचन in 269a; कार्ययोग: in 269b; साधु रसवत् फलमश्नुते in 270b. My suggestion that it is असकृत् is not supported by the printed text. Nor is it absolutely necessary.

271 — K. N. XII. 58.

272-273 — K. N. XIII. 1-2. V. L. कृतमन्त्र: सुमन्त्रज्ञो मन्त्रिणं मन्त्रिसंमतम् in 272a; read दूतं in 272b.

274-275 — K. N. XIII. 4, 6, 7. V. L. स भर्तु:° in 274a; स्ववाक्यपर_वाक्यानामिति in 274b; कार्यार्थमनु° in 275b.

277-279 — K. N. XIII. 11, 12, 14. V. L. वध्यमानोपि° in 277a; प्रश्रितया वाचा in 277b; द्रव्येण कर्मणा च in 278a; तपस्विव्यञ्जनोपेतै: स्वचारै: सह संपतेत् in 279.

280-282 -- K. N. XIII. 22b-25. V. L. वार्ता विशेषार्थी मर्त्ये in 280a. Read सर्व instead of सर्वा in the text; परिच्छेदः सुहृत्° in 280b; कृतपक्षोप° in 281a; गणाज्यन्तपालानामात्मसात्करणे° in 281b; युद्धापसार° in 282a; कर्मेति कीर्तितम् in 282a; °ऽगिनिरूपणम् in 282b; स्वपक्षं च, which is better, in 282c.

283 -- K. N. IX. 66. V. L. विस्रम्भे नित्यमुद्युक्तो in a.

284 -- K. N. X. 27 and Manu VII. 171.

285 -- K. N. X. 31. V. L. फले त्रयम् in a.

286-288 -- K. N. X. 34-36. V. L. अथेन वैतसीं° in 287b; सम्प्राप्नोति in 288a.

289 -- K. N. X. 39a.

290-294 -- K. N. X. 40-44. V. L. कालमास्थितः × × × × कच्चग्रहं श्रियः in 290b; कृतज्ञं मतिमन्तं in 291a; धृतिर्दीर्घसूत्रता in 292b; कोऽन्यविद्वान् in 293b; the commentary in the printed text construes as असाधुजनस्य संमतः; मनीषयान्वीक्षितमण्डलक्रियः in 294a; प्रियोद्यमः in 294b.

295-300 -- K. N. XIV. 4-9. V. L. भाजनं परमं श्रीणां in 295b; उत्थानाध्यवसायाभ्यां in 296b. Read संपत्स्वाद्धृद्धि° 297a; चोपगच्छति in 297b; प्रविशन्ति महालक्ष्म्यः in 298b; श्रीभिः षण्ड इव स्त्रीभिः in 299b; श्रियो हि सततोत्थायी in 300b.

301 -- K. N. XIV. 10b-11a. V. L. संश्रयेच्छेत् in a, which is better; वशं श्रियं in b.

302-305 -- K. N. XIV. 13-17a. V. L. स्फुरत्तीक्ष्णनखांशु° in 303a; नीचां° याति in 304b; महत्सत्त्वमधिष्ठितः in 305a; करोत्येव पदं मूर्ध्नि केसरी मत्तहस्तिनः in 305b; भोगं भोगीव in 305c.

306 -- K. N. XIV. 22. V. L. तस्य कर्म in b.

307-309 -- K. N. XIV. 23b-26. V. L. अमित्राप्रति° in 307a; °हि भूपतिः in 308b; हिरण्यवस्त्रधान्यादि वाहनादि तथैव च in 309a.

310 -- K. N. XIV. 31a-32.

311-315 -- K. N. XIV. 41-46a. V. L. सद्वर्णाश्रम° in 311a; °मार्गाराशिक्षणे in 311b; धृतता शाठ्ययुक्तेषु सत्सु सद्वृत्त° in

313b. Read धूर्तेन असाधु०; °नुमन्त्रत्वं० नात्स्थ्यमेव च in 314a; प्रशान्तध्यक्ष० in 315a; °चावर्णोपवर्णं in 315b.

316a -- K. N. XIV. 47a. V. L. धर्मासनप्रति०.

316b -- K. N. XIV. 52a.

317a -- K. N. XIV. 53a. V. L. अदण्ड्यमदण्ड्यानां.

317b — K. N. XIV. 58b.

318-319 -- K. N. XIV. 59-60. V. L. राजा नयपुरःसरः in 318a; तथैवाप्यपथ्य० in 319a; सन्तुमर्हति in 319b.

320-323 — K. N. XIV. 61-64. V. L. प्रमादा वैरकारिता in 321a; पूर्वोपविष्टंच in 321b; मृगिकाः शल्यभादयः in 322a; असत्कारश्च दण्डश्च in 322b.

324 -- K. N. XIV. 66.

325 -- K. N. XIV. 65. V. L. विशीर्णयन्त्रप्राकारपरिखात्वमशास्त्रत in a; क्षीणवासेन्धनान्नत्वात in b.

326-327 — K. N. XIV. 67-68. V. L. विमानितममानितं in 326a; अभृतं व्याधित० in 326b; अनृतप्राप्तमेव च in 327b.

328 — K. N. XtV. 71a, 72a.

329-330 -- K. N. XIV. 19b-21. V. L. दुर्भिक्षं मरणं तथा in 329b; शान्त्या वा प्रशमं नयेत् in 330a.

331-334 -- K. N. XIV. 33-35, 36b. V. L. जहात्याशु in 331b; भूमीनां च प्रसाधनं in 333b; दण्डाङ्गितत्प्रभवानि in 334. In the printed text, the last two verses are construed in the context of दण्ड, while in our book all the four verses speak of कोश.

335 — K. N. XV. 1. V. L. मित्रान्ता राज्यमुच्यते in a. I cannot guess what the third line was.

336-337 — K. N. XV. 2-3. The printed text of K. N. reads राजा त्वव्यसनी राजव्यसनापोहनक्षमः for 336a; V. L. न राजव्यसनापोहे समर्थं in 336b; आत्मामात्यप्रजादुर्गकोशानां० in 337a.

338 — K. N. XV. 7. 338a is the same as K. N. XV. 7a; 338b, however, seems to be made up of 7b

and 8b : the former reads :—मृतं व्यसनतत्त्वज्ञैः क्रोधजं व्यसनत्रयं ; the latter reads :—व्यसनं व्यसनार्थज्ञैश्चतुर्विधमुदाहृतम्.

339-345 — K. N. XV. 9-15. V. L. न कुर्याद्विप्रियां वाचं प्रकुर्याज्जनमात्मसात् in 339b ; मर्मच्छिन्निपतन्° in 341a ; रूक्षया प्रियवाग् भवेत् in 342a ; प्रियवाक्कमा in 342b ; तं युक्त्यैव नयेद्दण्डं in 343b ; तस्मात्तं द्विजयेत् in 345b.

346 — K. N. XV. 17. V. L. तत्र दण्डः प्रशस्यते in b.

347-353 — K. N. XV. 18-22 ; 24-25. V.L. तदकस्मात् in 348a ; अभिधानस्य संपत्या यानव्यसनजं महत् in 350a ; वृक्षसङ्कटजा दशा in 351a ; स्वसैन्यैश्च स्वकुल्यैश्च परभिन्नैश्च मार्गणे in 352a ; अजगर-मातङ्ग° भयादि च in 352b ; दवाग्निधूमसंरोधो in 353a.

354 — K. N. XV. 26. V. L. जितश्रमत्वे व्यायामः in a. Read आममङ्गः°.

355 — K. N. XV. 28. V. L. योग्यैव दिवानिशम् in a ; चलेषु यन्त्रलक्ष्येषु in b.

356a — K. N. XV. 27b.

357-360a — K. N. XV. 29 ; 30b-32. V. L. °गुल्मं विरागादपवर्जितं in 359a ; विलोकरूपशोभितं in 360a.

360b — K. N. XV. 35a. V. L. सुपात्यमृगसंपूर्ण°.

361 — K. N. XV. 37b-38. V. L. मन प्रीति° in a, तद्वनचारचिन्हैः कृशायास° in b, भुभुजामभिवृद्धये in c.

362-364 — K. N. XV. 40-41 ; 43. V. L. प्रानश्चङ्क्रमण° in 362 a ; महितो मतः in 362b ; °निहत मन्ये दुर्गमगोचरं in 363b ; मृगयां मृगयुर्यथा in 364b.

365-377 — K. N. XVI. 1-2a ; 3-4 ; 5b-9a ; 10-11 ; 13-15a ; 16a. V.L. व्यर्मनिर्वियुक्तः° in 365 a ; इत्येवमुपादिशन्ति in 366a ; तदापि यायादहितानि कर्तुं परस्य वा पीडनकर्शनानि in 367a ; स्ववीर्यधामार° in 368b ; निम्ने स्थले वा स्वमुखेन° in 369a ; प्रभुताम्बुवनेन° निर्वापणार्थ° in 370a ; कुष्टानि मतंगजानां in 370b ; शरीरेषु हि जाज्य° in 371a ; राज्ये निबद्ध° in 373a ; धीरत्वमेन पुंसां in 373b ; परिकल्पितानां in 374a ; यतोऽस्यानोपचयो विशङ्कः in 374b ; विश्रमयन्° in 375a ; अभ्युन्नतामग्र्युपुदार° in 375b.

378-379 — K. N. XVI. 18-19. V. L. गच्छेद्दुहिः प्रचारान् चाद्यांश्च कृत्वा विहितार्थकल्पान् in 379b. The latter half of 379b, corresponds with the latter half of K. N. XVI. 21b. It is quite possible that the scribe of our MS. may have left the intervening verses ( i. e. K. N. XVI. 19b, 20, 21a ) through oversight. This is borne out by the fact that v. 380 of our text is—K. N. XVI. 22a.

381-393 — K. N. XVII. 1-11 : 16b-17. V. L. यात्वा वैरि॰ in 381a ; महाख्यानसभा॰ in 382b : सामर्थ्याद्दिगागमुप॰ in 383b ; कक्षगुदाकारं महामार्गगमना॰ in 384b : महन्मौलबलान्वितं in 385a ; कंटागृहापनं in 385b : मांडं भूतं in 386a : अन्तः स्ववर्गिणः कुगानदुष्यान् दृष्ट॰ in 387a ; मण्डलेन निवेश॰ in 387b ; लब्धनामानन्तुरक्षाश्च॰ in 388a : शिबगृहायुधं in 389a ; निष्ठ द्राजाभिगुप्तयं in 389b : साध्वधिष्ठित॰ in 390a : सैन्यावियानाथ in 392 : कचिच्छुद्धं॰ in 393a.

394-410 — Yajñavalkya, I. 323, 326, 334-344 : 349-351.

414-415 — M. P. 220. 14-15.

417 — M. P. 220. 16.

418-422a — M. P. 220. 21-25. V. L. तथा तेन in 418a ; यस्तर्थकस्य in 418b ; दारुणांनातितीक्ष्णा॰ in 419b : नृपं हर्षवशं गतं in 421b.

— V. D. II. 65. 22a-27a. V. L. हर्षलसत्कथं in 421b. This appears to have been the reading of our MS.

425-428 — Mann VII. 47-50. V. L. II. 65. 27-31.

429-432 — M. P. 220. 26-27 ; 29a-31a : दुःसह्यभावतः in 430a ; स्मितपूर्वाभिभाषी स्यात् in 430b.

— V. D. II. 65. 27a-29a : 31-32. V. L. उत्क्षिप्तचेतसः in 429b ; otherwise this agrees with M. P.

433-435 — M. P. 221. 7b-10a. V. L. फलावहं in 434b ; नरः in 435c.

436 — M. P. 222. 2.

437 — M. P. 222. 3b-4.

438 — M. P. 222. 10. V. L. ऋजवः प्रणीता in a; सत्यपरा विनीता in b; मानोन्नता ये in d: Also—V. D. II. 67-10 which agrees with M. P.

439 — M. P. 223. 1. V. L. तु ये दुष्टा and भीतावमानिता in a.

440-442 — M. P. 223. 7-9. V. L. भाव्यम्तु and महीभृतः in 441a; सेनापतेर्नृप in 441b.

443 — M. P. 224. 1. V. L. °तमं मतं in a; सुदत्तेनेह भवति in b.

444 — M. P. 224. 8. V. L. सुदुर्जयं यो विबुधाधिवासः in d.

445 — M. P. 225. 1.

446 — M. P. 225. 5. V. L. यः स्वधर्मेण तिष्ठति in b.

447-448 — M. P. 225. 16b-17.

453-456 — Yājñavalkaya, II. 12-15.

457-458 — K. N. XIV. 36a-38a.

461 — Yājñavalkya, I, 367.

465 — Manu, VIII. 310.

466-467 — Manu, VIII. 124-125.

468a — Manu, VIII. 379a.

479 — Manu, VIII. 335.

480 — Yajñavalkya, I. 359.

483-485 — Manu, VII. 3-5.

486-495 — M. P. 226. 1-5; 8-12.

496 — M. P. 227. 217.

498-500 — M. B. V. 34. 10-12.

501-504 — M. B. V. 34. 15-18.

506-511 — M. B. V. 34. 24-29.

512 — M. B. V. 34. 43.

513 — M. B. V. 34. 62.

514 — M. B. V. 34. 80. In d, read नावसृजेत्परेभ्यः।

515 — M. B. V. 35. 41. V. L. सिध्यन्ते नात्र in b.

516 — M. B. V. 35. 51.

517 — M. B. V. 36. 58.

518 — M. B. V. 36. 61.

519 — M. B. V. 36. 60.

520 — M. B. V. 37. 7.

521 — M. B. V. 37. 19.

522 — M. B. V. 37. 26.

523-526 — M. B. V. 37. 52-55.

527 — M. B. V. 38. 26. Read अमोघक्रोधहर्षस्य in a.

528-530a — M. B. V. 38. 37b-39. Read वागदिग्धा in 528b.

530b-531a— M. B. V. 38. 29.

531b-532a— M. B. V. 38. 43.

532b-535a— M. B. V. 39. 6-8. Read वृद्धि: for वृत्ति: in 532b ; वृद्धि for बुद्धि in 533 ; यं लब्ध्वा बहु नाशयेत् in 534a.

535b-536a— M. B. V. 39. 18b-19a.

536b-537 — M. B. V. 39. 23b-24.

538-541 — M. B. V. 39. 37b-41a.

542-543 — M. B. V. 39. 46b-48a.

544 — M. B. V. 39. 55b-56a.

545-548 — M. B. V. 39. 61b-62 ; 64-66a.

549-551 — M. B. V. 39. 75b-78a.

552 — M. B. V. 39. 83.

553 — M. B. V. 40. 8. Read यश: कदर्यता in b ; हन्ति प[illegible] राजन् in c.

554 — M. B. V. 40. 26.

555 — K. N. I. 22.

556 — K. N. I. 48.

558 — K. N. III. 30.

561-565 — K. N. XVIII. 50-54.

568 — M. B. V. 33. 61.

569 — Manu, VII. 89.

623-624 — K. N. IX. 53 ; 64.

628 — Manu, VII. 111.

630 — Manu, VII. 115.